धर्मशास्त्रग्रन्थमाला.

[ ग्रन्थाङ्कः २५ (५) ]

श्री

वैद्यनाथदीक्षितीय-

# स्मृतिमुक्ताफलम्

( पञ्चमः खण्डः )

## कालकाण्डम् (५), प्रायश्चित्तकाण्डः (६)



जगन्नाथ रघुनाथ घारपुरे,
बी. ए., एल्एल्. बी., ( ऑनर्स–इन्–लॉ )

पुण्यपत्तनस्थव्यवहारशालाया आचार्यः, मुम्बईविश्वविद्यालयसदस्यः
भारतसङ्घन्यायसभासदस्यः, लंदनराजकलासंघसदस्यः

इत्यनेन संशोधितं, मुद्रापितं, प्रकाशितं च

प्रथमावृत्तिः

शकाब्दाः १८६२ क्रिस्ताब्दाः १९४०

श्री

# विषयानुक्रमणिका

## कालकाण्डम् ( ५ )

# प्रायश्चित्त काण्डः ( ६ )

# स्मृतिमुक्ताफलम्
## कालकाण्डम् (५)

**श्रीगणेशाय नमः** ॥ **अथ कालो निरूप्यते** ॥ स च कर्मण्यंगभूतः । तदाह **गार्ग्यः**—
" तिथिनक्षत्रवारादि साधनं पुण्यपापयोः । प्रधानगुणभावेन न स्वातंत्र्येण ते क्षमाः " ॥ इति ।
**व्यासोऽपि**—" यत्तिथौ यच्च नक्षत्रे वारे यत्र च यद्यथा । 5
" विहितं वा निषिद्धं वा पालयंस्त्रिदिवं व्रजेत् । अपालयन् पुनर्मोहादपवित्रं पदं व्रजेत् " ॥ इति ।

**निमेषादिलक्षणम्** । काल एकोऽप्युपाधिभेदादनेकप्रकारः । तथा च **गार्ग्यः**—
" अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्तितः । द्वौ निमेषौ त्रुटिर्नाम द्वौ त्रुटी तु लवः स्मृतः ॥
" द्वौ लवौ क्षण इत्युक्तः काष्ठा प्रोक्ता दश क्षणाः ।
"त्रिंशत्काष्ठाः कलाः प्रोक्ताः कलास्त्रिंशन्मुहूर्तकः । ते तु त्रिंशदहोरात्र इत्याह भगवान्हरः "॥ इति । 10

**तिथिस्वरूपम्** । तिथिस्वरूपमुक्तं **कालादर्शे**—
" रवीन्द्वोर्योगविरहौ क्रमाद्दर्शश्च पूर्णिमा । कलाः प्रवेशनिर्याणैस्तिथयोऽन्याश्च पक्षयोः " ॥ इति ।
सूर्याचंद्रमसोः सन्निकर्षो दर्शः । विप्रकर्षः पूर्णिमा भवति । इंदोः कलानां रवौ प्रवेशनिर्याणैः सूर्याचंद्रमसोः कृष्णशुक्लपक्षयोः प्रतिपदादयः तिथयो भवेयुरित्यर्थः ।

**खण्डतिथिलक्षणम्** । तत्र संपूर्णतिथौ नास्ति संदेहः । यदा ऱ्हासवृद्धिवशेन खंडतिथि- 15
र्भवति तदा निर्णयोऽपेक्ष्यते । ऱ्हासवृद्धी च **गार्ग्येण** दर्शिते—
" खर्वा दर्पा तथा हिंस्रा त्रिविधं तिथिलक्षणम् । धर्माधर्मवशादेव तिथिस्त्रेधा विवर्तते " ॥ इति ।
**खर्वा समतिथिः** । दर्पा वृद्धियुक्ता । हिंस्रा क्षययुक्ता ।
**खंडतिथौ** विधिनिषेधव्यवस्थामाह **वृद्धगार्ग्यः**—
" निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः । विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके ॥ 20
" तिथीनां पूज्यता नाम कर्मानुष्ठानयोग्यता । निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते " ॥ इति ।
" दर्शे स्नात्वा पितृभ्यस्तु दद्यात्कृष्णतिलोदकम् " इत्यादिविधिः कर्मानुष्ठानयोग्यतिथिमपेक्षते ।
" अमावास्यायां न गच्छेत्प्राप्तकालामपि स्त्रियम् । तैलं च न स्पृशेद्रामं वृक्षादींश्च न छेदयेत् " ॥
इत्यादिको निषेधस्तिथिमात्रमपेक्षत इत्यर्थः । एवं च सति खंडतिथौ पूज्यत्वं निर्णेतव्यं भवति ।
तत्र प्रतिपदमारभ्य पंचदश्यंतास्तिथयः क्रमेण निर्णीयन्ते । 25

**प्रतिपन्निर्णयः** । प्रतिपत् द्विविधा । शुद्धा विद्धा चेति । या सूर्योदयमारभ्य पुनरुदयपर्यंता भवति सा शुद्धा
" सर्वा एताश्च तिथय उदयादोदयस्थिताः । शुद्धा इति विनिश्चेयाः षष्टिनाड्यो हि वै तिथिः " ॥ इति **स्मृतेः** । शुद्धत्वात्प्रतिपदादिविहितं सर्वं निःशंकैस्तत्रानुष्ठेयम् । विद्धा च द्विविधा । पूर्वदिने दर्श-
युक्ता उत्तरदिने द्वितीयायुक्ता चेति । तत्र पूर्वविद्धायाः पूज्यत्वमाह **पैठीनसिः**— 30
" पंचमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या संमुखा तिथिः " ॥ इति ।

संमुखत्वं च **स्कांदपुराणे** विवेचितम्—

"संमुखा नाम सायाह्नव्यापिनी दृश्यते यदा । प्रतिपत्संमुखा कार्या या भवेदापराह्णिकी" ॥ इति ।

**व्यासोऽपि**—"प्रतिपत्सैव विज्ञेया या भवेदापराह्णिकी" ॥ इति ।

एतस्यैव पक्षस्यानुग्राहक उत्तरविद्धाया निषेधो **बृहद्वसिष्ठेन** स्मर्यते—

५ "द्वितीया पंचमी वेधाद्दशमी च त्रयोदशी । चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी" ॥ इति ।

द्वितीयादयः स्ववेधेन पूर्वामुत्तरां च तिथिं हन्युरित्यभिधानादुत्तरविद्धा प्रतिपदुपवासे निषिद्धा भवति । तथा च **ब्रह्मवैवर्ते**—

"प्रतिपत्पंचमीभूतसावित्रव्रतपूर्णिमा । नवमी दशमी चैव नोपोष्याः परसंयुताः" ॥ इति ।

सावित्रव्रतपूर्णिमा सावित्रव्रतयुक्ता पौर्णमासी । एतच्च पूर्वविद्धायाः प्रतिपदः पूज्यत्वाभिधानं

१० शुक्लप्रतिपद्विषयम् । अत एवोक्तं **निगमे**—

"युग्माग्नियुगभूतानां षण्मुन्योर्वसुरंध्रयोः । रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा ॥

"प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम्" ॥ इति । युग्मं द्वितीया । अग्निस्तृतीया । युगं चतुर्थी । भूतं पंचमी । षट् षष्ठी । मुनिः सप्तमी । वसुरष्टमी । रंध्रं नवमी । रुद्र एकादशी । अत्र युग्माग्न्यादिसप्तयुग्मेषु पूर्वा तिथिरुत्तरविद्धा ग्राह्या । उत्तरा तु पूर्वविद्धेत्युक्तं भवति ।

१५ **स्मृत्यंतरेऽपि**—

"एकादशी तथा षष्ठी अमावास्या चतुर्थिका । उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः" ॥ इति ।

**अन्यत्रापि**—

"षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी । एताः परयुताः पूज्याः पराः पूर्वेण संयुताः" ॥ इति ।

अत्र 'प्रतिपद्यप्यमावास्या पराः पूर्वेण संयुता' इति चामावास्यायुतायाः प्रतिपदः उपोष्यत्वा-

२० भिधानात् शुक्लप्रतिपद्विषयत्वं स्फुटमवगम्यते । न ह्येतानि वचनानि कृष्णपक्षविषयतायाः कथंचिदपि योजयितुं शक्यन्ते । एतदनुसारेण "प्रतिपत्सद्वितीया स्यात् द्वितीया प्रतिपद्युता" **इत्यापस्तम्ब**वचनं कृष्णपक्षविषयत्वेनैव संकोचनीयम् । एवं च 'नोपोष्याः परसंयुता' इति द्वितीयायुतोपवासनिषेधः शुक्लपक्षविषयतया योजनीयः । यत्तु **गोभिलवचनम्**—

"खर्वो दर्पो तथा हिंस्रा त्रिविधं तिथिलक्षणम् । खर्वादर्पे परे कार्ये हिंस्रा स्यात्पूर्वकालिकी" ॥ इति ।

२५ यदपि **बोधायनवचनम्**—

"वर्धमानस्य पक्षस्य उदया पूज्यते तिथिः । यदा पक्षः क्षयं याति तदा स्यादापराह्णिकी" ॥ इति ।

उदया उदयंगतेत्यर्थः । यदपि **स्मृत्यंतरवचनम्**—

"सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः । वर्धमानस्य पक्षस्य ह्रासे त्वस्तमया तिथिः" ॥ इति ।

वृद्धौ तिथिरुदयगता पूज्या क्षये त्वस्तगता पूज्येत्यर्थः । एतान्येकोद्दिष्टादिविषयाणि ।

३० तथाह **व्यासः**—

"द्वितीयादिकयुग्मानां पूज्यतानियमादिषु । एकोद्दिष्टादिवृध्यादौ ह्रासवृध्यादिचोदना ॥" इति ।

नियमादिष्वित्यादिशब्देन पितृकर्मव्यतिरिक्तव्रतोपवासादिसकलकर्मणां ग्रहणम् । एकोद्दिष्टादीत्यादि-शब्देन पार्वणश्राद्धस्य ग्रहणम् ।

१ ख—र्गार्ध । २ खगघ—ष्ट । ३ खग—श्य ।

**कालादर्शेऽपि**—
"प्रत्याब्दिकादिश्राद्धादौ वृद्धि-ह्रासादिचोदना। द्वितीयादिकयुग्मानां व्रतादौ पूज्यता भवेत् ॥"इति।
तदेवं वृद्धिह्रासानादरेण उपवासे शुक्लप्रतिपत् पूर्वविद्धा ग्राह्या कृष्णप्रतिपदुत्तरविद्धेति स्थितम्।
तिथीनां वेधः **पैठीनसिना** दर्शितः—
"पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम्। त्रिभिर्मुहूर्तैर्विध्यंति सामान्योऽयं विधिः स्मृतः" ॥ इति। ५
पूर्वेद्युरुदयानंतरममावास्या त्रिमुहूर्त्ता ततोऽधिका वा सा प्रतिपदं विध्यति। परेद्युरस्तमयात्प्राक् द्वितीया त्रिमुहूर्ता ततोधिका वा साऽपि पूर्वां प्रतिपदं विध्यतीत्येवं सर्वतिथिसाधारणो वेधो विशेषवचनाभावविषये द्रष्टव्यः। वेध्यापि प्रतिपद्दिवा त्रिमुहूर्ता ततोधिका वा भवेत् सा वेधार्हा भवेत्। न न्यूना। तदुक्तं **कालनिर्णये**—
"शुद्धा विद्धा तिथिः शुद्धा हीना तिथ्यान्ययाहनि। उदये पूर्वया तिथ्या विध्यते त्रिमुहूर्तकैः ॥ १०
"सायं तूत्तरया तद्वन्न्यूनया तु न विध्यते। वेध्यापि त्रिमुहूर्तैव न न्यूना वेधमर्हति ॥
"शुक्लपक्षे दर्शविद्धा कृष्णे विद्धा द्वितीयया। उपोष्या प्रतिपच्छुक्ले मुख्या स्यादापराह्णिकी ॥
"तदभावे तु सायान्हव्यापिनी परिगृह्यताम्। प्रातः संगवमध्यान्हापराह्णाः सायमित्यसौ ॥
"अत्रान्हः पंचधा भागो मुख्यो द्वित्र्यादिभागतः" ॥ इति। पूर्वाण्होऽपराण्ह इति द्वेधा विभागः। पूर्वाण्हो मध्यान्होऽपराह्ण इति त्रेधा विभागः। पूर्वाण्हो मध्यान्हः अपराण्हः सायान्ह १५ इति चतुर्धा विभागः। प्रातः संगवो मध्यान्होऽपराण्हः सायान्ह इति पंचधा विभागः। द्वित्र्यादिविभागात् पंचधाविभागस्य बहुश्रुतिस्मृतिसंमतत्वात् स एव मुख्य इत्यंतिमश्लोकार्थः। एवं च सत्युक्तेषु पंचस्वन्हो भागेषु पंचमं सायान्हभागं व्याप्य ततः पूर्वं चतुर्थमपराण्हभागं या शुक्लप्रतिपत्स्पृशति तादृशी पूर्वविद्धोपवासे पूज्या। स चोपवासः **भविष्योत्तरपुराणे** कार्तिकमासांतदर्शे पायसभोजनादिनियमं विधाय प्रतिपदि विहितः— २०
"मार्गशीर्षे ततो मासि प्रतिपद्यपरेऽहनि। स्पृष्ट्वा गुरुं चोपवसेन्महादेवं स्मरन्मुहुः" ॥ इति
**स्कंदपुराणे** कार्तिकशुक्लप्रतिपदि बल्युत्सवो विहितः। एवमन्यत्रापि द्रष्टव्यम्। पूर्वविद्धायां शुक्लप्रतिपदि योऽयमुपवासो विहितः तस्य प्रातरेव संकल्पः कार्यः। तदानीं ज्योतिःशास्त्रप्रसिद्धप्रतिपदभावेऽपि स्मृतिभिरापादितायाः प्रतिपदः सत्वात्। अत एव **देवलः**—
"यां तिथिं समनुप्राप्य त्वस्तं याति दिवाकरः। सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु" ॥ इति। २५
अत्र कर्मस्विति बहुवचनादुपवासादिनिखिलदैवकर्मपरिग्रहः। अत्रास्तमयात्पूर्वं मुहूर्तत्रयव्यापिनीं तिथिं समनुप्राप्येति व्याख्येयम्। न तु ततोऽल्पव्याप्तिर्न विवक्षिता।
तथा च **वृद्धवसिष्ठः**—
"यस्यां तिथावस्तमियात्सूर्यस्तु त्रिमुहूर्तकैः। यागदानजपादिभ्यस्तामेवोपक्रमेत्तिथिम्" ॥ इति।
**स्कांदेऽपि**— ३०
"यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीप्रियः। सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्ता यदा भवेत्" ॥ इति।
**सौरेऽपि**—
"यां प्राप्यास्तमुपेत्यर्कः स्याच्चेत्सा त्रिमुहूर्तगा। धर्मकृत्येषु सर्वेषु संपूर्णां तां विदुर्बुधाः" ॥ इति।
एवं च सायंतनत्रिमुहूर्त्तशुक्लप्रतिपदुपेतायां तिथौ प्रातरेव संकल्प्य प्रतिपदुपवासः कर्तव्य इति निश्चयः। पूर्वविद्धायां शुक्लप्रतिपदि उपवासं कृत्वा परेद्युः तिथ्यन्ते पारणं कुर्यात्। तदाह **सुमंतुः**— ३५
"तिथिनक्षत्रनियमे तिथिभान्ते च पारणम्। अतोऽन्यथा पारणे तु व्रतभंगमवाप्नुयात्" ॥ इति।

**निगमे**—"पूर्वविद्धासु तिथिषु भेषु च श्रवणं विना । उपोष्य विधिवत्कुर्यात्ततदंते तु पारणम्"॥ इति । **स्कांदेऽपि**—

" तिथीनामेव सर्वासामुपवासव्रतादिषु । तिथ्यंते पारणं कुर्याद्विना शिवचतुर्दशी " ॥ इति । अस्य तिथिभांतपारणस्यापवादः क्वचित् **स्मर्यते**—

५ " तिथ्यंते चैव भांते च पारणं यत्र चोद्यते । यामत्रयोर्ध्ववर्तिन्यां प्रातरेव हि पारणम् " ॥ इति । यत्तु **देवलवचनम्**—

" उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत् । अन्यथा तत्फलस्यार्धं धर्ममेवोपसर्पति " ॥ इति । धर्मो यमः । तत्पूर्वविद्धाव्यतिरिक्तपरविद्धाशुद्धतिथ्युपवासविषयम् । पूर्वविद्धायां विहितस्योपवासस्य केनापि निमित्तेन तत्रानुष्ठानासंभवे सत्युत्तरविद्धा गौणकालत्वेन ग्राह्या । "पौर्वाह्णिकास्तु तिथयो १० दैवकार्ये फलप्रदा " इति सामान्येन **स्मरणात्** । उक्तं च **कालनिर्णयसंग्रहे**—

" अभावेऽपि प्रतिपदः संकल्पः प्रातरिष्यते । तिथिस्त्रियामतोऽर्वाक् चेत् तिथ्यंते पारणं भवेत् ॥ " मुख्यातिथ्यंतरत्वे तु तिथिशेषोऽपि गृह्यताम् " ॥ इति ।

**एकभक्तव्रतनिर्णयः** । अथैकभक्तं निर्णीयते । तच्च त्रिविधम् । स्वतंत्रमन्यांगं उपवासप्रतिनिधिरूपं चेति । तेषु स्वतंत्रं **ब्रह्मपुराणे** पठ्यते—"प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः"॥ इति । १५ तत्र कर्मकालव्यापिनी तिथिर्ग्राह्या " यो यस्य विहितः कालस्तत्कालव्यापिनी तिथिः " इति **स्मृतेः** । कर्मकालस्तत्कर्मस्वरूपं चेत्युभयं **स्कंदपुराणे** दर्शितम्—

" दिनार्धसमयेऽतीते भुज्यते नियमेन यत् । एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि " ॥ इति । **देवलोऽपि**—

" दिनार्धसमयेऽतीते भुज्यते नियमेन यत् । एकभक्तमिति प्रोक्तं न्यूनं ग्रासत्रयेण तु " ॥ इति । २० अत्र दिनार्धस्योपरि सार्धमुहूर्तपरिमितः काल एकभक्तस्य मुख्यः । दिनार्धेऽतीते सति समनन्तरभावित्वादस्तमयात् प्राचीनो गौणः कालः । दिवेत्यभ्यनुज्ञानात् । अत्र मुख्यकालव्यापिनी तिथिर्ग्राह्या । अत एव **पाद्मे**—"मध्यान्हव्यापिनी ग्राह्या एकभक्ते सदा तिथिः " ॥ इति । **बोधायनोऽपि**—

" मध्यान्हव्यापिनी ग्राह्या एकभक्तव्रते तिथिः " ॥ इति । अत्र निर्णेतव्यो विषयः षोढा भिद्यते । पूर्वेद्युरेव मध्यान्हव्यापित्वं परेद्युरेव तद्व्यापित्वम् उभयत्र साम्येन तदेकदेशव्यापित्वं वैषम्येण २५ तदेकदेशव्यापित्वं चेति । तत्र प्रथमद्वितीययोर्मध्यान्हव्यापित्वस्यैव निर्णायकत्वम् । तृतीये पूर्वविद्धा ग्राह्या । मुख्यकालव्याप्तेः समत्वेऽपि गौणकालव्याप्तेः अधिकत्वात् । चतुर्थेऽपि पूर्वविद्धैव । उभयत्र मुख्यकालव्याप्त्यभावेऽपि गौणकालव्याप्तिलाभात् । पंचमेऽप्ययमेव न्यायो योज्यः । षष्ठे तु यस्मिन् दिने अधिकव्याप्तिः सैव ग्राह्या । एवं स्वतंत्रैकभक्तं निर्णीतम् । अन्यांगं त्वपराण्हादौ कार्यम् । " पूजाव्रतेषु सर्वत्र मध्यान्हव्यापिनी तिथिः " इति ' मध्यान्हे पूजयेन्नृप ' इत्यादि ३० शास्त्रैरंगिनः पूजादेर्मध्यान्हे विहितत्वेन एकभक्तस्य मुख्यकालासंभवात् उपवासप्रतिनिधिरूपमेकभक्तमुपवासतिथौ कार्यम् । तस्य गौणोपवासत्वात् ।

अत एव **सुमंतुः**—" तिथौ यत्रोपवासः स्यादेकभक्तेऽपि सा तिथिः " ॥

---

१ ख–त्वा ।

**नक्तव्रतम्** । अथ नक्तं निरूप्यते । तच्च **वराहपुराणे** पठ्यते—
"मार्गशीर्षे सिते पक्षे प्रतिपद्या तिथिर्भवेत् । तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुं च पूजयेत्"॥ इति ।
नक्तं कुर्वीत दिवा अभुंजानो रात्रिभोजनं कुर्वीतेत्यर्थः । तस्य काल उक्तः **कालादर्शे**—
" त्रिमुहूर्तास्तमानात्प्राक् परतश्च तथाविधा । तस्या नक्तव्रतं कुर्याद्धरिनक्तव्रताहृते "॥ इति ।
**कौर्मेऽपि**— ५
" प्रदोषव्यापिनी यत्र त्रिमुहूर्ता यदा दिवा । तदा नक्तव्रतं कुर्यात्स्वाध्यायस्य निषेधवत् "॥ इति ।
एतत्प्रदोषव्याप्तिर्मुख्यः कल्पः सायंकालव्याप्तिरनुकल्प इत्येवंपरम् । तथा च कालद्वयं **भविष्यत्पुराणे**
दर्शितम्—"मुहूर्तोनंदिनं नक्तं प्रवदंति मनीषिणः । नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप"॥ इति ।
अस्य च कालद्वयस्याधिकारिभेदेन व्यवस्थामाह **देवलः**—
" नक्षत्रदर्शनान्नक्तं गृहस्थस्य बुधैः स्मृतम् । यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते "॥ इति । १०
**स्मृत्यंतरेऽपि**—
" नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः । यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरम् ॥
"दिवा नक्तं तु तत्प्रोक्तमंतिमे घटिकाद्वयम् । निशा[3] नक्तं तु विज्ञेयं प्रवदन्ति मनीषिणः ॥
" नक्षत्रदर्शनान्नक्तं यामार्धे प्रथमे सदा " ॥ इति । रात्रिनक्तभोजने कालमाह **व्यासः**—
" त्रिमुहूर्तः प्रदोषः स्याद्भानावस्तंगते सति । नक्तं तत्र तु कर्तव्यमिति शास्त्रविनिश्चयः "॥ इति । १५
नक्तं त्रिमुहूर्तात्मकप्रदोषव्यापिन्यां तिथौ कार्यम् । यदाह **वत्सः**—
" प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः । एकादशीं विना सर्वा शुक्लकृष्णे तथा स्मृता "॥ इति ।
अयमपि विषयः षोढा भिद्यते । पूर्वेद्युरेव प्रदोषव्याप्तिः परेद्युरेव तद्व्याप्तिः उभयत्रापि तद्व्याप्तिः
उभयत्र तदभावः । उभयत्र साम्येन तदेकदेशव्याप्तिः । उभयत्र वैषम्येण तदेकदेशव्याप्तिरिति ।
तत्र प्रथमद्वितीययोः प्रदोषव्याप्तिर्नियामिका । उभयत्र तद्व्याप्तौ परतिथिरेव । तदाह **जाबालिः**— २०
" सदैव तिथ्योरुभयोः प्रदोषव्यापिनी तिथिः । तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा तिथिः "॥ इति ।
उभयत्रापि दिवारात्रावपि सा तिथिर्विद्यते इत्यर्थः । उभयत्र प्रदोषव्याप्त्यभावेऽपि परैव ।
तदाह **जाबालिः**—" अतथात्वे परत्र स्यादर्वागस्तंगते हि सा " इति । प्रदोषे तदभावेपि अस्त-
मयादर्वाग्यतः सा विद्यते सा ग्राह्येत्यर्थः । ईदृशे विषये गृहस्थोऽपि यतिवत् दिवा नक्तमाचरेत् ।
तदुक्तं **स्कांदे**—" प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते । २५
" आत्मनो द्विगुणच्छायामतिक्रामति भास्करे । तन्नक्तं नक्तमित्याहुर्न नक्तं निशिभोजनम् ॥
"एवं ज्ञात्वा ततो विद्वान्सायान्हे तु भुजिक्रियाम् । कुर्यान्नक्तव्रती नक्तफलं भवति निश्चितम्"॥ इति ।
प्रदोषव्यापिन्यां तिथौ भानुवारसंक्रांत्यादिना गृहस्थस्यापि यदा रात्रिभोजननिषेधः तदा दिवैव
नक्तं कुर्यात् । तथा च **भविष्यत्पुराणे**—
" ये त्वादित्यदिने ब्रह्मन्नक्तं कुर्वंति मानवाः । दिनांते तेऽपि कुर्वीरन्निषेधाद्रात्रिभोजने "॥ इति । ३०
अस्मिंश्च दिवाभोजने उत्तमोऽतिममुहूर्तः । मध्यम उपान्त्यः । ततः प्राचीनो जघन्यः । एवं च
सति अन्तिमाष्टमभागत्रिमुहूर्तवचनान्युपपद्यन्ते । रात्रिभोजनेऽपि घटिकात्रयमुत्तमः कालः ।
घटिकाषट्कं मध्यमः कालः
"प्रदोषोऽस्तमयादूर्ध्वं घटिकात्रयमिष्यते । त्रिमुहूर्तः प्रदोषः स्याद्रवावस्तंगते सति"॥ इति च **स्मृतेः**।

---

१ क्ष–म । २ ख–नं दि । ३ क्ष–दिवा ।

निशीथपर्यंतो जघन्यः कालः । नक्तं प्रकुर्वीत रात्रौ कुर्वीतेति सामान्येनाभिधानात् । असौर-नक्तेषु साम्येन वैषम्येण वा दिनद्वये प्रदोषैकदेशव्याप्तौ परेद्युरेव नक्तं कार्यं सायंकालस्य गौणस्य तिथिव्याप्तत्वात्सौरनक्तेषु सायंकालैकदेशव्याप्तौ पूर्वपूर्वतिथिर्ग्राह्या प्रदोषकालस्य तत्तिथि-व्याप्तत्वात् । " अर्कद्विपर्वरात्रौ च चतुर्दश्यष्टमी दिवा " इत्यनेन दिवाचतुर्दश्यष्टमीयोगे सति
५ भोजने प्रायश्चित्तविधानात् दिवा तत्संबंधसमये भोजननिषेधो गम्यते " निषेधस्तु निवृत्त्यात्मा कालधर्ममपेक्षते " इति स्मृतेः । तत्संबंधाभावसमये तु भोजनं न निषिध्यते । अत एव रात्रौ पर्वयोगे भोजने निषिद्धे तद्विगमे सति क्वचिद्भोजनमभ्यनुज्ञायते
**मनुना**—" चंद्रसूर्यग्रहे नाद्यादद्यात् स्नात्वा विमुक्तयोः " इति ।
**व्यासोऽपि**—" नाद्यात्सूर्यग्रहात्पूर्वमन्हि सायं शशिग्रहात् ।
१० "ग्रहकाले च नाश्नीयात्स्नात्वाऽश्नीयाच्च मुक्तयोः। मुक्ते शशिनि भुंजीत यदि न स्यान्महानिशा"॥इति ।
**वृद्धगौतमोऽपि**—
" चंद्रसूर्यग्रहे नाद्यात्तस्मिन्नहनि पूर्वतः । राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनम्" ॥ इति ।
चतुर्दश्यष्टमी दिवेत्यस्य नक्तव्रतत्वाभावान्नक्तन्यायोऽप्यत्र नावतरति । तदेवं प्रतिपद्युपवास एक-भक्तनक्तानि निर्णीतानि । तत्र शुक्लप्रतिपत्पूर्वविद्धैवोपोष्या कृष्णप्रतिपदुत्तरविद्धा । एकभक्त-
१५ नक्तयोस्तु सर्वासु तिथिषु मध्यान्हप्रदोषव्याप्त्या निर्णयः ।

**दानव्रतादीनां कालः** । दानव्रतादीनि उत्तरविद्धायां प्रतिपदि कर्तव्यानि । तेषां दैवत्वात् । तदाह **वृद्धयाज्ञवल्क्यः**—"पौर्वाह्णिकास्तु तिथयो दैवकार्ये फलप्रदाः" इति । अन्हः पूर्वो भागः पूर्वाण्हः । स च मुहूर्तत्रयात्मकः प्रातःकालः । कर्मकालव्याप्तिं च **वृद्धयाज्ञवल्क्य** आह—
"कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः । तथा कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्"॥ इति ।
२० **गार्ग्यश्च**—
" यो यस्य विहितः कालस्तत्कालव्यापिनी तिथिः । तथा कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्"॥
एवं च उदयानंतरं मुहूर्तत्रयव्यापिनी दानादौ तिथिर्ग्राह्या ।
" यां तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया स्नानदानजपादिषु ॥
" व्रतोपवासस्नानादौ घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी " ॥
२५ इति [1]केवलादिवचनं वैश्वानराधिकरणन्यायेन[2] त्रिमुहूर्तव्याप्तिप्रशंसापरम् । अत्रापि षोढा भिद्यते । उदयकाले पूर्वेद्युरेव त्रिमुहूर्तव्यापिनी परेद्युरेव तद्व्यापिनी उभयत्रापि त्रिमुहूर्त-व्यापिनी नोभयत्र त्रिमुहूर्तव्यापिनी साम्येन वैषम्येण वा त्रिमुहूर्तैकदेशव्यापिनीति । तत्र प्रथमद्वितीययोर्नास्ति संदेहः । तृतीयादिषु चतुर्षु पक्षेष्वस्तमयव्याप्तेः कर्मकालबाहुल्यस्य च लाभात् पूर्वेद्युरेवानुष्ठानमिति निर्णयः । पित्र्यकालस्तु **श्राद्धकांडे**[3] निरूपितः। इति प्रतिपन्निर्णयः।
३० अयमेव निर्णय उत्तरासु सर्वासु तिथिषु सामान्येन संचारयितव्यः। विशेषस्तु तत्र तत्राभिधास्यते ।

**द्वितीयानिर्णयः** । तत्र द्वितीयायाः परविद्धायाः उपोष्यत्वं **भृगुराह**—
"एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी। त्रयोदशी त्वमावास्या उपोष्याः स्युः परान्विताः"॥ इति।
**व्यासः**—" तृतीयया युता कार्या द्वितीया न तु पूर्वया " इति । यदा तु पूर्वेद्युरुदयमारभ्य परेद्युरुदयस्योपरि त्रिमुहूर्तं वर्तते तदा पूर्वेद्युरेव संपूर्णतिथित्वादुपवासः । तदुक्तं **कालनिर्णये**—
३५ " पूर्वेद्युरसती प्रातः परेद्युस्त्रिमुहूर्तगा । सा द्वितीया परोपोष्या पूर्वविद्धा ततोऽपरा " ॥ इति ।

---

१ **खगघ**–मात्र । २ जैमिनीय न्या. । १।४।१२ (सू. १७–२२) जातेष्टिन्यायः । ३ पृ. ७२३-७५२

**तृतीयानिर्णयः** । तृतीया परविद्धैव ग्राह्या । रंभाख्यव्रते तु पूर्वविद्धा ग्राह्या । तदुक्तं **ब्रह्मकैवर्ते**—

" रंभाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम । अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते " ॥ इति । गणश्चतुर्थी । **स्मृत्यंतरे**ऽपि—

" द्वितीयया तु विद्धा चेत्तृतीया न कदाचन । कर्तव्या व्रतिभिस्तात धर्मकामार्थतत्परैः ॥ ५

" विहायैकां च रंभाख्यां तृतीयां पुण्यवर्धिनीम् "॥ इति ।

**चतुर्थीनिर्णयः** । चतुर्थ्यपि परविद्धैव ग्राह्या । यदाह **बृहद्वसिष्ठः**—

" एकादशी तथा षष्ठी अमावास्या चतुर्थिका । उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः" ॥ इति ।

विनायकव्रतानुष्ठाने तु मध्यान्हव्यापिनी चतुर्थी ग्राह्या । तदाह **बृहस्पतिः**—

" चतुर्थीगणनाथस्य मातृविद्धा प्रशस्यते । मध्यान्हव्यापिनी चेत्स्यात्परतश्चेत्परेऽहनि " ॥ १०

मातृविद्धा तृतीयाविद्धा । **स्मृत्यंतरेऽपि**—

" मातृविद्धा प्रशस्ता स्याच्चतुर्थीगणनायके । मध्यान्हे परतश्चेत्स्यान्नागविद्धा प्रशस्यते "॥ इति। नागः पंचमी । एकभक्तन्यायेन मध्यान्हव्याप्तेः षोढा भेदे सति यदा परेद्युरेव मध्यान्हव्याप्तिः तदा परा । इतरेषु पंचसु भेदेषु जयायोगस्य प्रशस्तत्वात्पूर्वेद्युरेव सा भवति ।

**पञ्चमीनिर्णयः** । पंचमी पूर्वविद्धैव ग्राह्या । तदाह **हारीतः**— १५

" चतुर्थीसंयुता कार्या पंचमी परया न तु । दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथाऽसिते" ॥ इति ।

**षष्ठीनिर्णयः** । षष्ठी परविद्धा ग्राह्या । तदुक्तं **विष्णुधर्मोत्तरे**—

"एकादश्यष्टमी षष्ठी शिवरात्रीचतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विताः"॥ इति ।

स्कंदव्रते तु षष्ठ्याः पूर्वविद्धाया ग्राह्यत्वमाह **वसिष्ठः**—

"कृष्णाष्टमी स्कंदषष्ठी शिवरात्रिश्चतुर्दशी । एताः पूर्वयुताः कार्यास्तिथ्यंते पारणं भवेत् "॥ इति । २०

यदि कदाचित्तिथिक्षयवशादुत्तरविद्धा न लभ्यते तदा स्कांदव्रतवदन्यान्यपि व्रतानि पंचमीविद्धायां कर्तव्यानि । तदाह **वसिष्ठः**—

"एकादशी तृतीया च षष्ठी चैव त्रयोदशी । पूर्वविद्धा तु कर्तव्या यदि न स्यात्परेऽहनि"॥ इति।

**सप्तमीनिर्णयः**। सप्तमी पूर्वविद्धैव ग्राह्या । "षष्ठ्या युता सप्तमी च कर्तव्या तत्र सर्वदा"॥ इति **स्मृतेः** । उत्तरविद्धाप्रतिषेधः **स्कंदपुराणे** दर्शितः— २५

" षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाऽष्टमी । सप्तमी परविद्धा च नोपोष्यं तिथिपंचकम् "॥ इति।

पूर्वविद्धायाः सप्तम्या अलाभे तूत्तरविद्धा ग्राह्या । तदुक्तं **कालनिर्णये**—

" सप्तमी पूर्वविद्धैव व्रतेषु निखिलेष्वपि । अलाभे पूर्वविद्धायाः परविद्धापि गृह्यताम् " ॥ इति ।

**अष्टमीनिर्णयः** । अथाष्टमी निर्णीयते । तत्र शुक्लाष्टमी परविद्धा ग्राह्या । तथा च **निगमे**—

" शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी । पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥ ३०

" उपवासादिकार्येषु ह्येष धर्मः सनातनः " ॥ इति । **स्कांदेऽपि**—

"अष्टमी नवमी मिश्रा कर्तव्या भूतिमिच्छता । सप्तम्या चाष्टमी चैव न कर्त्तव्या शिखिध्वज"॥ इति।

कृष्णपक्षे पूर्वविद्धायाः परिग्रहः परविद्धायाः प्रतिषेधश्च **निगमे** पठ्यते—

" कृष्णपक्षेऽष्टमी यत्र कृष्णपक्षे चतुर्दशी । पूर्वविद्धा तु कर्तव्या परविद्धा न कस्यचित् ॥

" उपवासादिकार्येषु ह्येष धर्मः सनातनः " ॥ इति । व्रतविशेषे तु तत्र तत्रोक्तं द्रष्टव्यम् । ३५

---

१ खगघ-पौर्णमासी । २ क्ष-यस्तु ।

तथा दूर्वाष्टमीसंज्ञकव्रतविशेषविषये **भविष्यत्पुराणम्**—
"श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या। पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनम्"॥ इति।

**कृष्णजन्माष्टमी**। कृष्णजन्माष्टमीव्रतात् जयन्तीव्रतं भिन्नम्। जन्माष्टमीव्रते तिथिरेव निमित्तम्। जयंतीव्रते तु रोहिणीयोगः। तथा च **स्मर्यते**—

५ "श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम्। न करोति नरो यस्तु भवति क्रूरराक्षसः॥
"श्रावणस्य च मासस्य कृष्णाष्टम्यां नराधिप। रोहिणी यदि लभ्येत जयंती नाम सा तिथिः"॥ इति।

**वसिष्ठसंहितायाम्**—
"श्रावणे वा नभस्ये वा रोहिणी सहिताऽष्टमी। यदा कृष्णा नरैर्लब्धा सा जयंतीति कीर्तिता॥
"श्रावणेन भवेद्योगो नभस्ये तु भवेद्ध्रुवम्। तयोरभावे योगस्य तस्मिन् वर्षे न संभवः"॥ इति।

१० अत्र श्रावण इति मुख्यकल्पः। नभस्य इत्यनुकल्पः। एतदेवाभिप्रेत्य **विष्णुरहस्येऽपि**—
"अष्टमी कृष्णपक्षस्य रोहिणी ऋक्षसंयुता। भवेत्प्रोष्ठपदे मासि जयंती नाम सा स्मृता"॥ इति।

**हरिवंशे**—
"अभिजिन्नाम नक्षत्रं जयन्ती नाम शर्वरी। मुहूर्तो विजयो नाम यत्र जातो जनार्दनः"॥ इति।
अत्र श्रावणनभस्यप्रौष्ठपदशब्दाः सिंहश्रावणादिपराः। तथा च **ज्योतिषार्णवे**—
१५ "श्रावण्यां प्रौष्ठपद्यां वा यदा सिंहगतो रविः। जयंत्याराधनं कुर्यान्न तु कर्कटकन्ययोः"॥ इति।

**वाराहेऽपि**—"सिंहराशिगते सूर्ये गगने जलदाकुले। मासि प्रौष्ठपदेऽष्टम्यामर्धरात्रे विधूदये॥
"बुधवारे वृषे लग्ने रोहिण्याश्चरमांशके। शुभे हर्षणयोगे च कौलवेन युते तथा॥
"वसुदेवेन देवक्यामहं जातोऽस्मि पद्मजे"॥ इति। यस्मिन्वर्षे श्रावणे वा नभस्ये वा जयंती न संभवति तस्मिन्वर्षे श्रावणमास एव कृष्णाष्टमीव्रतमनुष्ठेयम्। तस्य स्वरूपमुपवासमात्रम्—
२० "केवलेनोपवासेन तस्मिन्जन्मदिने मम। सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः"॥ इति **स्मृतेः**।
यदि शिष्टास्तत्रापि जागरणदानादिकमनुतिष्ठन्ति अनुतिष्ठन्तु नाम। अविरुद्धैः पुण्यविशेषैः व्रतस्योपोद्बलनसंभवाच्छास्त्रेण तु प्रापितमुपवासमात्रम्। जयंतीव्रतस्य तु दानादिसहित उपवासः स्वरूपम्। तथा च **भविष्योत्तरे**—"मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्षके।
"शशांके वृषराशिस्थे ऋक्षे रोहिणिसंज्ञके। योगेऽस्मिन्वसुदेवाद्धि देवकी मामजीजनत्॥
२५ "तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषितः। ब्राह्मणान्भोजयेद्भक्त्या ततो दद्याच्च दक्षिणाम्॥
"हिरण्यं मेदिनीं गावो वासांसि कुसुमानि च। यद्यदिष्टतमं तत्तत्कृष्णो मे प्रीयतामिति"।
जयंतीं प्रकृत्य नारदीयसंहितायां **स्मर्यते**—
"उपोषणं जन्मदिने कुर्याज्जागरणं च यः। अर्धरात्रयुताष्टम्यां सोऽश्वमेधफलं लभेत्"॥
शुद्धं नित्यं जन्माष्टमीव्रतं करणे फलविशेषस्मरणात् अकरणे प्रत्यवायस्मरणाच्च। नित्यं काम्यं
३० च जयंतीव्रतं अकरणे प्रत्यवायस्मरणात्फलविशेषस्मरणाच्च।
तथा हि जन्माष्टम्या अकरणे प्रत्यवायः **स्मर्यते**—
"कृष्णजन्मदिने प्राप्ते यो भुंक्ते तु द्विजोत्तमः। त्रैलोक्यसंभवं पापं तेन भुक्तं द्विजोत्तम"॥ इति।

**स्कांदपुराणेऽपि**—

"ये न कुर्वंति जानंतः कृष्णजन्माष्टमीव्रतम् । ते भवन्ति नराः पापा व्याला व्याघ्राश्च कानने" ॥ इति ।
तथा जयंतीव्रतस्याकरणे **स्कान्दे** प्रत्यवायः स्मर्यते—
" शूद्रान्नेन तु यत्पापं शवहस्तस्थभोजने । तत्पापं लभते कुन्ति जयन्त्यां भोजने कृते ॥
" ब्रह्मघ्नस्य सुरापस्य स्त्रीवधे गोवधेऽपि वा । न लोको यदुशार्दूल जयंतीविमुखस्य च ॥ ५
" न करोति यदा विष्णोर्जयंतीसंभवं व्रतम् । यमस्य वशमापन्नः सहते नारकीं व्यथाम् ॥
" जयंतीवासरे प्राप्ते करोत्युदरपूरणम् । संपीड्यतेऽतिमात्रं तु यमदूतैः कलेवरम् " ॥ इति ।
जयंतीव्रते फलविशेषोऽभिहितो **भविष्योत्तरे**—
" प्रतिवर्षं विधानेन मद्भक्तो धर्मनंदन । नरो वा यदि वा नारी यथोक्तं फलमाप्नुयात् ॥
" पुत्रसंतानमारोग्यं सौभाग्यमतुलं भवेत् । सदा धर्मरतिर्भूत्वा मृतो वैकुंठमाप्नुयात् ॥ १०
" तत्र दिव्येन मानेन वर्षलक्षं युधिष्ठिर । भोगान् नानाविधान्भुक्त्वा पुण्यशेषादिहागतः ॥
" सर्वकामसमृद्धे तु कुले महति जायते " ॥ इति । **पाद्मेऽपि**—
" प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः । यैः कृता श्रावणे मासि अष्टमे रोहिणी युता " ॥ इति ।
" किं पुनर्बुधवारेण सोमेनापि विशेषतः " ॥ इति ।
ननु जन्माष्टमीव्रतेऽपि फलं **स्मर्यते** " सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः " इति १५
अतस्तदपि नित्यं काम्यमिति चेन्नैवम् । उपात्तदुरितक्षयमात्रेण काम्यत्वे संध्यावंदनादेरपि काम्यत्वप्रसंगात्सत्यपि पापक्षये फलांतरास्मरणात् । अतः केवलं नित्यं जन्माष्टमीव्रतम् । नित्यं काम्यं च जयंतीव्रतम् ।

नन्वेवं व्रतभेदे सति यदा दिनद्वयेऽष्टमी वर्तते रोहिणी तूत्तरदिन एव तदा पूर्वदिने जन्माष्टम्युपवासः परेद्युर्जयंत्युपवास इति नैरंतर्येणोपवासद्वयं प्रसज्येतेति चेन्न । रोहिणीयोगसंभवे २०
जन्माष्टम्या अपि तत्रैव कर्तव्यत्वात् । सैर्वतिथिष्वलभ्ययोगस्य केवलतिथेरुत्कृष्टत्वेन केवलाया-स्तिथेस्तत्रोपेक्षणीयत्वात् । यदा त्वेकस्मिन्नेव दिने अष्टमी वर्तते रोहिण्या च युज्यते तदा जन्माष्टमीजयंत्योः सह प्रयोगस्यावश्यंभावित्वेन जयंतीव्रत एव जन्माष्टमीव्रतमंतर्भवतीति न पृथगुपवासप्रसंगः । तदुक्तं **कालनिर्णये**—
"यस्मिन्वर्षे जयंत्याख्यो योगो जन्माष्टमी तदा । अंतर्भूता जयंत्यां स्यादृक्षयोगः प्रशस्यते" ॥ इति २५
**ग्राह्या तिथिर्निरूप्यते** । जन्माष्टम्या जयंत्याश्चार्धरात्रप्रधानत्वात् तद्योगोऽतिप्रशस्तः ।
तदुक्तं **वसिष्ठसंहितायाम्**—
" अष्टमी रोहिणीयुक्ता निश्यर्धे यदि दृश्यते । मुख्यकाल इति ख्यातस्तत्र जातो हरिः स्वयम् "॥
**विष्णुरहस्येऽपि**—
"रोहिण्यामर्धरात्रे तु यदा कृष्णाष्टमी भवेत् । तस्यामभ्यर्चनं शौरेर्हंति पापं त्रिजन्मजम्"॥ इति । ३०
एवं च सत्यर्धरात्रसद्भाव एवात्र कर्मकालव्याप्तिः । तत्र **योगीश्वरः**—
" रोहिणीसहिता कृष्णा मासे च श्रावणेऽष्टमी । अर्धरात्रादधश्चोर्ध्वं कलयाऽपि यदा भवेत् ॥
" जयंती नाम सा प्रोक्ता सर्वपापप्रणाशिनी " ॥ इति । पक्षांतरमाह **स** एव—
" अर्धरात्रादधश्चोर्ध्वमेकार्धघटिकान्विता । रोहिणी चाष्टमी ग्राह्या उपवासव्रतादिषु " ॥ इति ।

१ क्ष–पूर्वत्र ।

एकघटिकान्विता वा अर्धघटिकान्विता वा । तत्रायमर्थः संपद्यते । पूर्वभागावसन्न एका घटिका उत्तरभागाद्द्वेका मिलित्वा निशीथशब्दवाच्यं मुहूर्तं तावत्परिमाणं मुख्यः कल्पः । तदसंभवे उभयत्र अर्धघटिका तस्या अप्यसंभवे कलेति । एवं चार्धरात्रे कलामात्रमष्टमीसद्भावेऽपि जयन्तीयोगस्य प्रतिपादनात् "अष्टमी चेत् सप्तमी विद्धा तस्यां नाराधयेद्धरिम्" इति वचनं
५ निर्मूलम् । सोऽयमर्धरात्रयोगो मुख्यः कल्पः । कृत्स्नाहोरात्रयोगोऽत्यंतमुख्यः ।
यदा कदाचित् मुहूर्तयोगः स्वल्पयोगश्चानुकल्पः तदा वसिष्ठसंहितायाम्—
"अहोरात्रं तयोर्योगो ह्यसंपूर्णो भवेद्यदि । मुहूर्तमप्यहोरात्रे योगश्चेत्तामुपोषयेत् ॥
"वासरे वा निशायां वा यत्र स्वल्पाऽपि रोहिणी । विशेषेण नभोमासे सैवोपोष्या मनीषिभिः" ॥इति ।
यो जयंतीव्रते योगनिर्णयः स एव जन्माष्टमीव्रतेऽपि द्रष्टव्यः
१० "दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला । रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥
"अष्टमी शिवरात्री च अर्धरात्रादधो यदि । दृश्यते घटिका या सा पूर्वविद्धा प्रकीर्तिता" ॥ इति स्मृतेः ।
तत्र जन्माष्टमी द्विविधा । शुद्धा सप्तमीविद्धा चेति । सूर्योदयमारभ्य प्रवर्तमानाष्टमी शुद्धा । निशीथादर्वाक्सप्तम्या कियत्यापि युक्ता विद्धा । शुद्धापि पुनर्निशीथव्याप्त्यव्याप्तिभ्यां द्विविधा । तत्र "निशीथव्यापिनी मुख्या विशेषेणेंदुसंयुताम्" इति वचनात् "निशीथव्याप्तिरहितापि
१५ रात्रियुक्तां प्रकुर्वीत" इति वचनात् गृहीतव्या भवति ।

ननु पूर्वेद्युर्निशीथादूर्ध्वमारभ्य परेद्युर्निशीथादर्वाग्या समाप्यते तस्यामुभयत्र रात्रिसंबंधसत्वात् कुत्रोपवास इति चेत्परेद्युरेवोपवासः कार्यः । प्रातः संकल्पकालमारभ्य प्रवर्तमानत्वात् ।

सप्तमी विद्धापि त्रिविधा । पूर्वेद्युरेव निशीथव्यापिनी परेद्युरेव तद्व्यापिनी उभयत्रापि निशीथव्यापिनी चेति । तत्र प्रथमद्वितीययोः पक्षयोर्निशीथव्याप्तेः प्रयोजकत्वेन "या
२० निशीथव्यापिनी सा विशेषणेन्दुसंयुताम्" इति वचनेन ग्रहीतव्या भवति । तृतीये तु पक्षे परेद्युरुपवासः प्रातःसंकल्पमारभ्य तिथिव्याप्तिसंभवात् ।

रोहिणीसहिताष्टमी चतुर्विधा । शुद्धा विद्धा शुद्धाधिका विद्धाधिका चेति । तत्र शुद्धायां संपूर्णयोगो निशीथयोगो यत्किंचिन्मुहूर्तयोग इति त्रैविध्यं भवति । एवं विद्धायामपि त्रैविध्यं । एतेषु षट्सु पक्षेषु दिनांतरे योगाभावादुपवासे संदेहो नास्ति । किन्तु योगतारतम्यात् प्राशस्त्य-
२५ तारतम्यं भवति । यत्किंचिन्मुहूर्तयोगः प्रशस्तः । निशीथयोगः प्रशस्ततरः । संपूर्णयोगः प्रशस्ततमः । शुद्धाधिका तु सूर्योदयमारभ्य प्रवृत्ता परेद्युः सूर्योदयमतिक्रम्य एषा वर्धते । सा च त्रिविधा । पूर्वेद्युरेव रोहिणीयुक्ता परेद्युरेव तद्युक्ता दिनद्वयेऽपि रोहिणीयुक्ता चेति । तत्राद्ययोर्नास्ति संदेहः । रोहिणीयोगस्य नियामकत्वात् । तृतीये तु रोहिणीयोगस्य उभयत्र समानत्वेऽपि गुणाधिक्यात्पूर्वैवोपोष्या । तथा हि सा रोहिणीयोगभेदात् त्रिधा भिद्यते । अष्टमी-
३० वत्सूर्योदयमारभ्य प्रवृत्ता रोहिणी कदाचित्परेद्युरपि कियती वर्धते । कदाचित् पूर्वेद्युर्निशीथमारभ्य रोहिणी प्रवर्त्तते । कदाचिन्निशीथादूर्ध्वमारभ्य प्रवर्तते । तत्र प्रथमद्वितीययोर्निशीथयोगस्य सत्वात्पूर्वेद्युरेवोपवासः । तृतीयपक्षे दिनद्वयेऽपि निशीथे जयंतीयोगो नास्ति । पूर्वेद्युर्निशीथे केवलाष्टमी परेद्युः केवलरोहिणी । तत्र निशियोगाभावेऽपि रात्रियोगस्य सत्वादष्टम्याः प्राधान्याच्च पूर्वेद्युरुपवासः । तदेवं शुद्धाधिका पूर्वैवोपोष्या । निशीथादर्वाक्सप्तम्या युक्ता परेद्युरपि विद्यमाना
३५ विद्धाधिका । सा च त्रिविधा । पूर्वेद्युरेव रोहिणीयुक्ता विद्धाधिका परेद्युरेव रोहिणयुक्ता उभयत्र

रोहिणीयुक्ता विद्धाधिकेति । प्रथमद्वितीययोस्तु रोहिणीयोगो नियामकः । या तूभयत्र रोहिणी-युक्ता विद्धाधिका साऽपि निशीथे जयंतीयोगमपेक्ष्य चतुर्धा भिद्यते । पूर्वेद्युरेव निशीथयोगवती परेद्युरेव निशीथयोगवती उभयत्रापि तादृशी उभयत्रापि निशीथयोगरहिता चेति । तत्र प्रथम-द्वितीययोः निशीथयोगो नियामकः । तृतीयचतुर्थयोः परदिन एवोपवासः । परेद्युः संकल्पकाले तिथिनक्षत्रयोगस्य सत्वात् । जयंतीभेदेषूपवासादिने यदि सोमवारो बुधवारो वा भवति तदा ५ फलाधिक्यं भवति । तदुक्तं **ब्रह्मपुराणे**—

" प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः । यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ॥

" किं पुनर्बुधवारेण सोमेनापि विशेषतः । किंपुनर्नवमी युक्ता कुलकोटयास्तु मुक्तिदा " ॥ इति ।

दिनद्वयेऽप्यर्धरात्रसंबन्धाभावे **स्कांदेऽपि**—

" उदये वाष्टमी किंचिन्नवमी सकला यदि । भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता । १०

" अपि वर्षशतेनापि लभ्यते वाऽथ वा न वा " ॥ इति ।

**पारणनिर्णयः** । यथोक्तरीत्या विहिततिथावुपवासं कृत्वा परेद्युः

" पूर्वाह्णे पारणं कृत्वा उपवासं समापयेत् । उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत् ॥

"पारणान्तं व्रतं ज्ञेयं व्रतान्ते द्विजभोजनम् । असमाप्ते व्रतं पूर्वे नैव कुर्याद्व्रतांतरम्"॥ इति **स्मृतेः** ।

एवं सामान्यतः पूर्वाह्णे पारणप्राप्तौ क्वचिदपवादः **स्मर्यते**— १५

" अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं क्वचित् ।

" तिथिरष्टगुणं हंति नक्षत्रं तु चतुर्गुणम् । तस्मात्प्रयत्नतः कुर्यात्तिथिभांते च पारणम् "॥ इति ।

**नारदीये**—"तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् । पारणं तु न कर्तव्यं यावन्नैकस्य संक्षयः ॥

" सांयोगिके व्रते प्राप्ते यश्चैकोऽपि वियुज्यते । तत्रैव पारणं कुर्यादेवं वेदविदो विदुः " ॥ इति ।

**ब्रह्मवैवर्ते**— २०

" सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते । अन्यथा पुण्यहानिः स्याद्दृते धारणपारणम् " ॥ इति ।

**स्मृत्यंतरे**—

" तिथ्यर्क्षयोर्यदा च्छेदो नक्षत्रांतमथापि वा । अर्धरात्रेऽपि वा कुर्यात्पारणं च परेऽहनि" ॥ इति ।

उपवासदिनादपरेऽहनि दिवसे यद्युभयांतः तदा पारणमिति मुख्यः कल्पः । नक्षत्रांतमित्यनेन एकतरांतत्वमभिहितम् । सोऽयमनुकल्पः । यदि रात्रौ निशीथादर्वागुभयांत एकतरांतो वा २५ भवति तदा दिवसे मुख्यानुकल्पयोरुभयोरप्यसंभवाद्रात्रौ पारणस्य निषिद्धत्वाच्च तत्राप्युपवास-प्रसक्तौ पारणस्य प्रतिप्रसवः क्रियते । "अर्धरात्रेऽपि वा कुर्यात्" इति । अशक्तस्य तिथिनक्षत्रयो-रुभयोरनुवर्त्तमानयोरपि प्रातर्देवं संपूज्य क्रियमाणं पारणं नैव दुष्यति

" जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् । तिथ्यंते वोत्सवांते वा व्रती कुर्वीत पारणम् " ॥

इति वचनात्— ३०

**नवमीनिर्णयः** । अथ नवमी निर्णीयते । सा च दुर्गासरस्वतीव्रतादौ पूर्वविद्धैव ग्राह्या

" अष्टम्या नवमी युक्ता कर्तव्या फलकांक्षिभिः । न कुर्यान्नवमीं तात दशम्यां तु कदाचन " ॥

इति **स्मरणात्** । महानवम्यां तु—

" आश्वयुक्शुक्लनवमी तथा नक्तं चतुर्दशी । जयायुक्ता न कर्तव्या पूर्णायुक्ता प्रशस्यते " ॥

जया अष्टमी । पूर्णा दशमी । ३५

श्रीरामनवमीनिर्णयः।

श्रीरामनवमीव्रतमुक्तमगस्त्यसंहितायाम्—“ श्रीरामनवमी प्रोक्ता कोटिसूर्यग्रहाधिका।
“ तस्मिन्दिने महापुण्ये राममुद्दिश्य भक्तितः। यत्किंचित्क्रियते कर्म तद्भवक्षयकारणम्।
“ उपोषणं जागरणं पितृनुद्दिश्य तर्पणम्। तस्मिन्दिने तु कर्तव्यं ब्रह्मावाप्तिमभीप्सुभिः ”॥ इति।
५ तत्रोपवासो जयंतीवन्नित्यकाम्यरूपः। द्वैरूप्यं च तस्य द्विविधप्रमाणबलादवसीयते। उपवासविधिवाक्येषु नित्यशब्दसदाशब्दादीनां नित्यत्वसाधकानां श्रवणान्नित्यत्वसिद्धिः। तानि च साधकानि संग्रहकारेण संगृहीतानि—“नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत्” इत्युक्त्वाऽतिक्रमे दोषश्रुतेरत्यागचोदनात्। “ फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्तितम् ” इति।
अत्र नित्यादिपदान्यभिधीयंते। अकरणे प्रत्यवायश्च स्मर्यते अगस्त्यसंहितायाम्—
१० “ नित्यमेव तु कर्तव्यं श्रीरामनवमीव्रतम्।
“ चैत्रे मासि नवम्यां तु शुक्लायां रघुनंदनः। प्रादुरासीत्पुरा ब्रह्मन् परं ब्रह्मैव केवलम्॥
“ तस्मिन्दिने तु कर्तव्यमुपवासव्रतं सदा।
“ प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढधीः। उपोषणं न कुरुते कुंभीपाकेषु पच्यते ”॥ इति।
स्मृत्यंतरेऽपि—
१५ “ यस्तु रामनवम्यां तु भुंक्ते मोहाद्विमूढधीः। कुंभीपाकेषु घोरेषु पच्यते नात्र संशयः ”॥ इति।
काम्यत्वं च फलश्रवणादवसीयते। तथा च तत्रैव—
“ कुर्याद्रामनवम्यां य उपोषणमतंद्रितः। न मातुर्गर्भमाप्नोति स वै रामो भवेत्स्वयम्॥
“ तस्मात्सर्वात्मना सर्वे कृत्वैव नवमीव्रतम्। मुच्यंते सर्वपापेभ्यो यांति ब्रह्मसनातनम् ”॥ इति।
अन्ये त्वाहुः व्रतमिदं केवलं नित्यं न तु काम्यमपि पशुपुत्रस्वर्गादिफलस्याश्रवणात्।
२० “ संध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यांति ब्रह्मलोकं सनातनम् ”॥ इति।
फलश्रवणेऽपि संध्योपासनस्य यथा नित्यत्वं तथा पापक्षयद्वारा मोक्षार्थस्यास्य नित्यत्वमिति।
अत्र मध्यान्हव्यापिनी तिथिर्ग्राह्या।
“ ह्मर्षं पूषणि संप्राप्ते लग्ने कर्कटकाव्हये। आविरासीत्स्वकलया कौसल्यायाः परः पुमान्॥
“चैत्रशुद्धा तु नवमी पुनर्वसुयुता यदि। सैव मध्यान्हयोगेन महापुण्यतमा भवेत्”॥ इति स्मृतेः।
२५ यस्मिन्वर्षे पुनर्वसुयोगो नास्ति तस्मिन्वत्सरे केवलनवम्युपोष्या। “ केवलाऽपि सदोपोष्या नवमीशब्दसंग्रहात् ” इति वचनात्। सा च द्विविधा। शुद्धा विद्धा वेति। सूर्योदयमारभ्य प्रवर्त्तमाना शुद्धा। त्रिमुहूर्तया तदधिकया वाऽष्टम्या युक्ता विद्धा। तत्र शुद्धा त्रिविधा। शुद्धाधिका शुद्धसमा शुद्धन्यूना चेति। अत्र नास्ति संशयः। दिनांतरे मध्यान्हव्याप्त्यभावात्। सा च पुनः प्रत्येकं द्विविधा पुनर्वसुनक्षत्रयुक्ता तद्रहिता चेति। तत्र पुनर्वसुयुक्तशुद्धाधिका त्रिविधा। पूर्वेद्युरेव नक्षत्र-
३० युक्ता परेद्युरेव तद्युक्ता उभयत्र तद्युक्ता चेति। तत्र प्रथमद्वितीययोर्नक्षत्रयोगो नियामकः।
“पुनर्वस्वृक्षसंयोगः स्वल्पोऽपि यदि दृश्यते। चैत्रशुक्लनवम्यां तु सा तिथिः सर्वकामदा”॥ इति स्मृतेः।
तृतीये तु मध्यान्हे पुनर्वसुयुक्तदिनं ग्राह्यम्। तथाऽगस्त्यः—
“ चैत्रशुद्धा तु नवमी पुनर्वसुयुता यदि। सैव मध्यान्हयोगेन महापुण्यतमा भवेत् ”॥ इति।

एवं विद्धायामपि कृष्णाष्टम्यादिवत् पक्षभेदो निर्णयश्च द्रष्टव्यः । विद्धानिषेधस्तु वैष्णवविषयः ।
"नवमी चाष्टमी विद्धा त्याज्या विष्णुपरायणैः। तदन्येषां तु सर्वेषां व्रतं तत्रैव निश्चितम्"॥ इति स्मृतेः।

**दशावतारकालाः** । दशावतारकालाः **संग्रहकारेण** संगृहीताः—
" चैत्रे मास्यसिते पक्षे त्रयोदश्यां तिथौ विभुः । उद्भून्मत्स्यरूपेण रक्षार्थमवनेर्हरिः ॥
" ज्येष्ठमासे तथा कृष्णद्वादश्यां भगवानजः । मंदरं पृष्ठतः कृत्वा कूर्मरूपी हरिर्दधौ ॥ ५
" चैत्रकृष्णे तु पंचम्यां जज्ञे नारायणः स्वयम् । भुवं वराहरूपेण शृंगाभ्यामुदधेर्जलात् ॥
" वैशाखे शुक्लपक्षे तु चतुर्दश्यामिनेऽस्तगे । उद्बभूवासुरद्वेषी नृसिंहो भक्तवत्सलः ॥
" मासि भाद्रपदे शुक्लद्वादश्यां वामनो विभुः । अदित्यां काश्यपाज्जज्ञे नियंतुं बलिमोजसा ॥
" मार्गशीर्षे द्वितीयायां कृष्णपक्षे तु भार्गवः । दुष्टक्षत्रियविद्वेषी रामोऽभूत्तापसाग्रणीः ॥
" चैत्रशुक्लनवम्यां तु मध्यान्हे रघुनंदनः । दशाननवधाकांक्षी जज्ञे रामः स्वयं हरिः ॥ १०
" वैशाखे शुक्लपक्षे तु तृतीयायां हलायुधः । संकर्षणो बलो जज्ञे रामः कृष्णाग्रजो हरिः ।
" मासि तु श्रावणाष्टम्यां निशीथे कृष्णपक्षके । प्राजापत्यर्क्षसंयुक्ते कृष्णं देवक्यजीजनत् ।
" मासे भाद्रपदे शुक्लद्वितीयायां जनार्दनः । म्लेच्छाक्रांते कलावंते कल्किरूपो भविष्यति ।
" अवतारदिने पुण्ये हरिमुद्दिश्य भक्तितः । उपवासादि यत्किंचित्तदानंत्याय कल्पते " ॥ इति ।

**दशमीनिर्णयः** । अथ दशमी निर्णीयते । तस्याश्च न तिथ्यंतरवद्धेयोपादेयविभागोऽस्ति । १५
तथा **चांगिराः**—
" संपूर्णा दशमी कार्या परया पूर्वयाऽथवा । युक्ता न दूषिता यस्मात्तिथिः सा सर्वतोमुखी"॥ इति।
यथा संपूर्णा तिथिर्दोषरहिता तथा पूर्वविद्धा परविद्धा चेत्यर्थः । अत्र व्यवस्थामाह **शंखः**—
" शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः। कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः"॥ इति।
" नवमी दशमी चैव नोपोष्या परसंयुता " इति वचनं कृष्णपक्षविषयतया योजनीयम् । २०

**एकादशीनिर्णयः** । अथैकादशी निर्णीयते । तत्रोपवासो नित्यकाम्यरूपः उपवासविधिषु नित्यत्वसाधकानां नित्यादिपदानां श्रवणात् । सायुज्यादिफलश्रवणाच्च ।
नित्यशब्द उदाहृतो **गारुडपुराणे**—"उपोष्यैकादशी नित्यं पक्षयोरुभयोरपि " ॥ इति ।
सदाशब्द उक्तः **सनत्कुमारसंहितायाम्**—"एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयोः " ॥ इति।
एवमन्यान्यपि वचनानि—" उपोष्यैकादशी राजन्यावदायुः सुवृत्तिभिः । २५
" न करोति हि यो मूढ एकादश्यामुपोषणम् । स नरो नरकं याति रौरवं तमसा वृतम् ।
" समादाय विधानेन द्वादशीव्रतमुत्तमम् । तस्य भंगं नरः कृत्वा रौरवं नरकं व्रजेत् ॥
" मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा । एकादश्यां तु यो भुंक्ते पक्षयोरुभयोरपि "॥
इत्यादीनि नित्यसाधकानि द्रष्टव्यानि । काम्यत्वसाधकं फलं च श्रूयते **विष्णुरहस्ये**—
" यदीच्छेत् विष्णुसायुज्यं सुखं संपदमात्मनः । एकादश्यां न भुंजीत पक्षयोरुभयोरपि" ॥ इति । ३०
**स्कांदेपि**—
" यदीच्छेद्विपुलान्भोगान्मुक्तिं चात्यंतदुर्लभाम् । एकादश्यामुपवसेत्पक्षयोरुभयोरपि " ॥ इति ।
**नारदोऽपि**—" एकादशीसमं किंचित्पापत्राणं न विद्यते ।
" स्वर्गमोक्षप्रदा ह्येषा राज्यपुत्रप्रदायिनी । सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी " ॥ इति ।

१ क्ष–जि ।

**कौर्मेऽपि**—
" यदीच्छेद्विष्णुसायुज्यं श्रियं संततिमात्मनः । एकादश्यां न भुंजीत पक्षयोरुभयोरपि " ॥ इति ।
तदेवं नित्यादिशब्दश्रवणान्नित्यत्वं फलश्रवणात् काम्यत्वं च सिद्धम् । उक्तं च **कालादर्शे**—
" सर्वस्मृतिपुराणेतिहासादिषु विनिश्चितम् । एकादशीव्रतं तच्च नित्यं काम्यमिति द्विधा"॥ इति।
५ सर्वासु स्मृतिषु सर्वेषु पुराणेषु इतिहासेषु भारतादिषु च एकादशीव्रतं विनिश्चितं विशेषेण प्रमितम्।
अनेन निर्मूलत्वभ्रान्त्या ये मूढाः संदिहते निरस्तास्ते वेदितव्याः । स्मृतयस्तावदुदाह्रियंते ।
**विष्णुस्मृतौ**—" एकादश्यां न भुंजीत कदाचिदपि मानवः " ॥ इति ।
**कात्यायनः**—" एकादश्यामुपवसेत्पक्षयोरुभयोरपि " इति ।
**कण्वः**—" एकादशीमुपवसेन्न कदाचिदतिक्रमेत् " इति । **सनत्कुमारः**—
१० " निष्कृतिर्मद्यपस्योक्ता धर्मशास्त्रे मनीषिभिः । एकादश्यन्नकामस्य निष्कृतिः क्वापि नोदिता"॥ इति।
**नारदेऽपि**—" एकादशीसमं किंचित्पापत्राणं न विद्यते " इति । **प्रचेताः**—
" एकादशीविवृद्धा चेच्छुक्ले कृष्णे तथैव च । उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद् गृही " ॥ इति ।
**बृहद्वसिष्ठः**—
"द्वादशी घटिकाऽल्पा वा यदि न स्यात्परेऽहनि । दशमीमिश्रिता कार्या महापातकनाशिनी"॥ इति।
१५ **हारीतोऽपि**—
" त्रयोदश्यां यदा न स्यात् द्वादशी घटिकाद्वयम् । दशम्यैकादशी विद्धा सैवोपोष्या कदाचन"॥ इति।
**ऋष्यशृंगः**—
" एकादशी न लभ्येत सकला द्वादशी भवेत् । उपोष्या दशमी विद्धा ऋषिरुद्दालकोऽब्रवीत्" ॥ इति ।
काम्योपवासमधिकृत्यांगिराः—
२० " सायमाद्यन्तयोरन्होः सायंप्रातश्च मध्यमे । उपवासफलप्रेप्सुर्जह्याद्भक्तचतुष्टयम् " ॥ इति ।
**देवलोऽपि**—
" दशम्यामेकभक्ताशी मांसमैथुनवर्जितः । एकादशीमुपवसेत्पक्षयोरुभयोरपि " ॥ इति ।
**पुलस्त्यः**—" एकादश्यां न भुंजीत नारी दृष्टे रजस्यपि " इति ॥ **गोभिलः**—
" न शंखेन पिबेत्तोयं नाश्नीयात्कूर्मसूकरौ । एकादश्यां न भुंजीत पक्षयोरुभयोरपि " ॥ इति ।
२५ एवमादीनि **स्मृतिवचनानि** द्रष्टव्यानि । **पुराणवचनान्युदाह्रियंते । नारदीये वसिष्ठः**—
" एकादशीसमुत्थेन वन्हिना पातकेन्धनम् । भस्मतां याति राजेंद्र अपि जन्मशतोद्भवम् ॥
" नेदृशं पावनं किंचिन्नराणां भूप विद्यते । यादृशं पद्मनाभस्य दिनं पातकहानिदम् ॥
" न गंगा न गया भूप न काशी न च पुष्करम् । न चापि कौरवं क्षेत्रं न देवा न च देविका ॥
" यमुना चंद्रभागा च तुल्या नृप हरेर्दिनात् । अनायासेन राजेंद्र प्राप्यते वैष्णवं पदम् ॥
३० " प्रसंगादथवा दंभाल्लोभाद्वाऽथ नराधिप । एकादश्यामनश्नन्यः सर्वदुःखाद्विमुच्यते " ॥ इति ।
**कौर्मेऽपि**—
" वदंतीह पुराणानि भूयो भूयो वरानने । न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे " ॥ इति ।
**विष्णुरहस्येऽपि**—
" परमापदमापन्नो हर्षे वा समुपस्थिते । सूतके मृतके चैव न त्यजेत् द्वादशीव्रतम् " ॥ इति ।
एवमादीन्युपवासपराणि वचनानि बहूनि संति । *तानि विस्तरभयान्न लिख्यंते ।*

**वैष्णवानामुपवासाङ्गतिथिनिर्णयः** । अथ वैष्णवानामुपवासांगतिथिर्निर्णीयते । तन्निर्णयस्य च वेधाधीनत्वात्प्रथमं दशमीवेधो निरूप्यते । स च वेधः त्रिविधः । अरुणोदयवेधः सूर्योदयवेधः पंचदशनाडीवेधश्चेति । तत्रारुणोदयवेधो **भविष्यत्पुराणे** दर्शितः—

" अरुणोदयकाले तु दशमी यदि दृश्यते । सा विद्धैकादशी तत्र पापमूलमुपोषणम् " ॥ इति ।

अरुणोदयस्य प्रमाणं **स्कंदनारदाभ्यामुक्तम्**—"उदयात् प्राक्चतस्रस्तु नाडिका अरुणोदयः" इति । ५

**गोभिलः**—

" अरुणोदयवेलायां दशमीसंयुता यदि । संपृक्तैकादशीं तां तु मोहिन्यै दत्तवान्विभुः " ॥ इति ।

**सौरधर्मे**—

"आदित्योदयवेला या प्राङ्मुहूर्तद्वयान्विता । सैकादशीति संपूर्णा विद्धाऽन्या परिकीर्तिता" ॥ इति ।

सूर्योदयवेधः **कण्वेन** दर्शितः— १०

" उदयोपरि विद्धा तु दशम्यैकादशी यदा । दानवेभ्यः प्रीणनार्थं दत्तवान्पाकशासनः " ॥ इति ।

**स्मृत्यंतरेऽपि**—

" दशम्याः प्रांतमादाय यत्रोदेति दिवाकरः । तेन स्पृष्टं हरिदिनं दत्तं जंभासुराय तु " ॥ इति ।

पंचदशनाडीवेधस्तु **स्कांदे** दर्शितः—

" नागो द्वादशनाडीभिः दिक्पंचदशभिस्तथा । भूतोष्टा दशनाडीभिर्दूषयत्युत्तरां तिथिम् " ॥ इति । १५

नागः पंचमी । दिक् दशमी । पंचदशनाडीबोधस्य वेधांतरस्य च विषयव्यवस्था **निगमे** दर्शिता—

" सर्वप्रकारवेधोऽयमुपवासस्य दूषकः । सार्धः सप्तमुहूर्तं तु वेधोऽयं बाधते व्रतम् " ॥ इति ।

यत्तु **स्मर्यते**—

" अर्धरात्रात्परा यत्र एकादश्युपलभ्यते । तत्रोपवासः कर्तव्यो दशमी न तु वै कला " ॥ इति ।

न तद्वेधाभिप्रायेण किं तु अर्धरात्रवेधोऽपि यदा वर्ज्यः तदा किमु वक्तव्यमरुणोदयवेध इति २० कैमुत्यप्रदर्शनपरम् । तथा **ब्रह्मकैवर्ते**—

" अर्धरात्रे तु केषांचिद्दशम्या वेध इष्यते । अरुणोदयवेलायां नावकाशो विचारणे " ॥ इति ।

विद्धानिषेध उक्तो **नारदीये**—

"कलावेधेऽपि विप्रेन्द्र दशम्यैकादशीं त्यजेत् । सुराया बिन्दुना स्पृष्टं गंगांभ इव निर्मलम् " ॥ इति ।

**स्मृत्यंतरेऽपि**— २५

"कलार्धेनापि विद्धा स्याद्दशम्यैकादशी यदि । तदाप्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्" ॥ इति ।

सोऽयं कलादिवेधः अरुणोदये सूर्योदये च समानः । तत्रारुणोदयवेधे वैष्णवविषयः । तच्च **गारुडपुराणे** स्पष्टमवगम्यते—

" दशमीशेषसंयुक्तो यदि स्यादरुणोदयः । नैवोपोष्यं वैष्णवेन तद्धि नैकादशीव्रतम् " ॥ इति ।

**वैष्णवशब्दार्थः** । वैखानस पांचरात्रादिवैष्णवागमोक्तदीक्षां प्राप्तो वैष्णवः । ३०

" पांचरात्राद्यागमोक्तदीक्षां प्राप्तस्तु वैष्णवः " इति स्मृतेः । **स्कांदेऽपि**—

" परमापद्मापन्नो हर्षे वा समुपस्थिते । नैकादशीं त्यजेद्यस्तु यस्य दीक्षा तु वैष्णवी ॥

"समात्मा सर्वजीवेषु निजाचारादविप्लुतः । विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते " ॥ इति

उक्तलक्षणं वैष्णवं प्रति तिथिरेवं निर्णेतव्या । एकादशी द्विविधा । अरुणोदयवेधवती शुद्धा चेति ।

---

१ क्ष–ढि । २ खगघ–पाठः ।

तत्र वेधवती सर्वथा त्याज्या 'तद्धि नैकादशीव्रतम्' इत्यादिभिः प्रतिषेधात्। तत्रारुणोदयवेधस्य प्रतिषेधे सूर्योदयवेधस्य त्याज्यत्वमर्थसिद्धम्। कण्ववचनं चात्र पूर्वमुदाहृतम्। या तु वेधरहिता अरुणोदयमारभ्य प्रवृत्ता शुद्धैकादशी सा द्विविधा। आधिक्येन युक्ता तद्रहिता चेति। आधिक्यं चतुर्विधम्। एकादश्याधिक्यं द्वादश्याधिक्यमुभयाधिक्यमुभयानाधिक्यं। तत्राद्येषु त्रिषु पक्षेषु
५ शुद्धामप्यरुणोदयमारभ्य प्रवृत्तां परित्यज्य परेद्युरुपवासः कर्तव्यः। तत्रैकादश्याधिक्ये स्मृत्यंतरम्—

"एकादशी यदा पूर्णा परतः पुनरेव सा। पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणम्"॥ इति।

नारदोऽपि—

"संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी। द्वादश्यां लंघनं कार्यं त्रयोदश्यां तु पारणम्"॥ इति।

१० द्वादश्याधिक्ये व्यास आह—

"एकादशी यदा लुप्ता परतो द्वादशी भवेत्। उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम्"॥ इति।

स्मृत्यंतरेऽपि—

"एकादशी तु संपूर्णा द्वादशी वृद्धिगामिनी। वंचुळी नाम सा प्रोक्ता कोटियज्ञफलप्रदा॥

"वंचुळीं द्वादशीं त्यक्त्वा यः कुर्यात्पूर्ववासरे। सप्तजन्मार्जितं पुण्यं तत्क्षणादेव नश्यति"॥ इति।

१५ उभयाधिक्ये तु नारद आह—

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि"॥ इति।

गुरुरपि—

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि"॥ इति।

उभयाधिक्यरहितायां तु शुद्धायां न कोऽपि संदेहः। इति वैष्णवदीक्षायुक्तानामेकादशी निर्णीता।

२० **स्मार्तैकादशीनिर्णयः**। अथ श्रौतस्मार्तपर्यवसितानां आगमोक्तदीक्षारहितानामेकादशी निर्णीयते। अरुणोदयवेधस्य वैष्णवविषयत्वे व्यवस्थिते सत्युदयवेधः स्मार्तविषयत्वेन परिशिष्यते। अत एव स्मर्यते—

"अतिवेधा महावेधा ये वेधास्तिथिषु स्मृताः। सर्वेऽप्यवेधा विज्ञेया वेधः सूर्योदये मतः"॥ इति।

वेधादीनां स्वरूपमुक्तं ब्रह्मकैवर्ते—

२५ "चतस्रो घटिकाः प्रातररुणोदयसंज्ञिताः। चतुष्टयविभागोऽत्र वेधादीनां किलोदितः॥

"अरुणोदयवेधः स्यात्सार्धं तु घटिकात्रयम्। अतिवेधोऽपि घटिका प्रभासंदर्शनाद्रवेः॥

"महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते। तुरीयस्तत्र विहितो योगः सूर्योदये बुधैः"॥ इति।

अरुणोदयकाले घटिकार्धे दशमीसद्भावो वेधः घटिकाव्याप्तिरतिवेधः। उदयात्पूर्वं कृत्स्नारुणोदयकालव्याप्तिर्महावेधः। सूर्योदयकाले दशमीसद्भावो योगः उदयवेध इति यावत्। वेधातिवेधमहा-
३० वेधयोगाश्चत्वार उपवासस्य दूषकाः। तत्र

"दशमीशेषसंयुक्तो यदि स्यादरुणोदयः। नैवोपोष्यं वैष्णवेन तद्धि नैकादशीव्रतम्"॥ इति

वचनेनारुणोदयवेधस्य वैष्णवविषयत्वे निश्चिते सति पारिशेष्यात् 'सर्वेऽप्यवेधा विज्ञेया' इति वचनाच्च सूर्योदयवेधः स्मार्तविषय इति निश्चीयते। एवं च सूर्योदयवेधमपेक्ष्य द्वेधा भिद्यते। शुद्धा विद्धा चेति। शुद्धैकादशी वृद्धिसाम्यह्रासैस्त्रिविधा। शुद्धाधिका शुद्धसमा शुद्धहीनेति।

एवं विद्धापि त्रिधा। विद्धाधिका विद्धसमा विद्धहीनेति। तत्र शुद्धाप्रकारेषु त्रिषु विद्धा-प्रकारेषु त्रिषु च एकैका एकादशी द्वादशी वृद्धिसाम्यहीनतागुणैर्भूयस्त्रिविधा। शुद्धाधिका द्वादश्यधिका शुद्धाधिका द्वादशीसमा शुद्धाधिका द्वादशीहीना शुद्धसमा द्वादश्यधिका शुद्धसमा द्वादशीसमा शुद्धसमा द्वादशीहीना शुद्धहीना द्वादश्यधिका शुद्धहीना द्वादशीसमा शुद्धहीना द्वादशीहीना विद्धाधिका द्वादश्यधिका विद्धाधिका द्वादशीसमा विद्धाधिका द्वादशीहीना विद्ध- ५ समा द्वादश्यधिका विद्धसमा द्वादशीहीना विद्धहीना द्वादश्यधिका विद्धहीना द्वादशीसमा विद्धहीना द्वादशीहीनेति। एवमष्टादशधा भिन्नैकादशी। तदुक्तं **ब्रह्मसिद्धांते**—

"शुद्धा विद्धा दशम्या क्वचिदपि च ततो द्वैधमेकादशीयं
"प्रत्येकं च त्रिधाऽसौ पुनरपि समतान्यूनताधिक्ययोगात्।
"पक्षाः प्रत्येकभिन्नाः पुनरपि षडमी द्वादशीन्यूनताद्यैः १०
"संबंधादेवमष्टादश खलु मिलिताः कल्पनाः संभवन्ति" ॥ इति।

अष्टादशभेदप्रतिपादनपूर्वकं यथाक्रममुपवासनिश्चयमाह **कालादर्शकारः**—

"शुद्धा विद्धा द्विधा वृद्धिसाम्यह्रासैः पुनस्त्रिधा। तत्रैकैका द्वादशीस्था वृद्धिसाम्योनतागुणैः ॥
"आद्योपोष्या परोर्ध्वे द्वे पौर्वपर्यात् व्यवस्थिते। गृहियत्योरुत्तरासु षट्सु पूर्वैव संमता ॥
"तिसृष्वंत्यासु विद्धैव तत्पूर्वे तु व्यवस्थिते। अविद्धैव तु शेषासु तृतीयासु व्यवस्थिता"॥ इति। १५

आद्योपोष्या परेति द्वादश्याधिक्ययुक्ता शुद्धाधिकैकादशी परैवोपोष्या। तदाह **नारदः**—

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। तत्रोपोष्या द्वितीया तु पुत्रपौत्रविवर्धनी" ॥ इति।

**गारुडपुराणे**—"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। तत्रोपोष्या परा पुण्या परतो द्वादशी यदि"॥

**स्मृत्यंतरे**—"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। वैष्णवी चेत्त्रयोदश्यां घटिकैकाऽपि दृश्यते ॥
"गृहस्थोऽपि परां कुर्यात्पूर्वां नोपवसेत्तदा। पूर्णाऽप्येकादशी त्याज्या वर्धतो द्वितयं यदि"॥ इति। २०

वैष्णवी द्वादशी। **वाराहेऽपि**—

"एकादशी विष्णुना चेत् द्वादशी परतः स्थिता। उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदम्"॥ इति।

ऊर्ध्वे द्वे एकादश्यौ। द्वादशीसाम्ययुक्ता शुद्धाधिका द्वादशीहानियुक्ता शुद्धाधिकेति द्वे एका-दश्यौ पौर्वापर्यात्पूर्वा गृहस्थानां परा यतीनामिति व्यवस्थिते। तदाह **स्कंदः**—

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही" ॥ इति। २५

**स्कांदेऽपि**—"प्रथमेऽहनि संपूर्णा व्याप्त्याऽहोरात्रसंयुता।
"द्वादश्यां च तथा किंचिद्दृश्यते पुनरेव च। पूर्वा कार्या गृहस्थैस्तु यतिभिश्चोत्तरा विभो"॥ इति।

**स्मृत्यंतरे**—"पुनः प्रभातसमये घटिकैका यदा भवेत्।
"अत्रोपवासो विहितः चतुर्थाश्रमवासिनाम्। विधवायाश्च तत्रैव परतो द्वादशी न चेत्" ॥

**गारुडपुराणेऽपि**— ३०

"पुनः प्रभातसमये घटिकैका यदा भवेत्। अत्रोपवासो विहितो वनस्थस्य यतेस्तथा ॥
"विधवायाश्च तत्रैव परतो द्वादशी न चेत्। पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणम्"॥ इति।

**मार्कंडेयः—**

" संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । पूर्वामुपवसेत् कामी निष्कामस्तूत्तरां सदा "॥ इति।
कामिपदं गृहस्थोपलक्षणं निष्कामपदं यत्युपलक्षणम् ।
केचिद्गृहस्थस्यापि निष्कामित्वे उत्तरा तिथिरुपोष्येत्याहुः । तथा **विष्णुरहस्ये—**
५ " निष्कामस्तु गृही कुर्याद्‌त्तरैकादशीं सदा । सकामस्तु सदा पूर्वामिति बोधायनो मुनिः "॥ इति।
यत्तु **स्मृत्यंतरवचनम्—**
" संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत् ॥
" उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः "॥ इति तत् गृहियत्योर्व्यवस्थितं यत्पौर्वापर्यं तदभिप्रायेण । अत एवोक्तं **कालनिर्णये—**
१० "एकादशीमात्रवृद्धौ गृहियत्योर्व्यवस्थितिः । उपोष्या गृहीभिः पूर्वा यतिभिस्तूत्तरा तिथिः"॥ इति।
उत्तरासु षट्सु पूर्वेत्र द्वादश्याधिक्ययुक्ता शुद्धसमा द्वादशीसाम्ययुक्ता शुद्धसमा द्वादशीहानियुक्ता शुद्धसमा द्वादश्याधिक्ययुक्ता शुद्धहीना द्वादशीसाम्ययुक्ता शुद्धहीना द्वादशीहानियुक्ता शुद्धहीनेति षट्स्वेकादशीषु पूर्वैवोपोष्या । तदाह **स्कंदः—**
" शुद्धा यदा समा हीना समा क्षीणाऽधिकोत्तरा। एकादशीमुपवसेन्न शुद्धां वैष्णवीं सदा "॥ इति।
१५ यत्तु **स्मृत्यंतरे**ऽभिहितम्—"शुद्धाऽप्येकादशी त्याज्या परतो द्वादशी यदि" इति यदपि वचनांतरं
" द्वादशी तु त्रयोदश्यां कलामात्रापि दृश्यते । द्वादशद्वादशीर्हन्ति पूर्वस्यां पारणं कृतम्" ॥ इति।
यदपि **स्कांदवचनम्—**
" एकादशी भवेत्पूर्णा परतो द्वादशी यदि । तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्"॥ इति।
यदपि **कालिकापुराणवचनम्—**
२० "एकादशी यदा पूर्णा परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र तिथिवृद्धिः प्रशस्यते "॥ इति।
यदपि **स्मृत्यंतरवचनम्—**
" एकादशी तु संपूर्णा द्वादशी वृद्धिगामिनी । वंचुली नाम सा प्रोक्ता कोटियज्ञफलप्रदा ॥
" वंचुलीं द्वादशीं त्यक्त्वा यः कुर्यात्पूर्ववासरे । सप्तजन्मार्जितं पुण्यं तत्क्षणादेव नश्यति"॥ इति।
एवमादीनि द्वादशीमात्रवृद्धौ परदिनोपवासविधायीनि वचनानि वैष्णवविषयाणि । स्मार्तानामपि
२५ विद्धैकादशीविषयाणि । तथा च **स्मर्यते—**
" आदित्योदयमारभ्य भवेदेकादशीतिथिः । परेऽह्नि द्वादशी पूर्णा त्रयोदश्यां च वर्धते ॥
" उपोष्या द्वादशी तत्र वैष्णवैर्मोक्षकाङ्क्षिभिः "॥

**व्यासः—**

"एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम् "॥ इति।
३० लुप्ता आदौ दशमीमिश्रितत्वात्परतो वृद्ध्यभावाच्च क्षयं गतेति यावत् । उक्तं च **कालनिर्णये—**
" द्वादशीमात्रवृद्धौ तु शुद्धाविद्धे व्यवस्थिते । शुद्धा पूर्वोत्तरा विद्धा स्मार्तनिर्णय ईदृशः"॥ इति।
विद्धाधिका द्वादश्यधिका विद्धाधिका द्वादशीसमा विद्धासमा द्वादश्यधिका इति पक्षत्रयेऽपि परदिन एवोपवासः । तथा **भविष्यत्पुराणे—**
" एकादशीं दिशायुक्तां वर्धमाने विवर्जयेत् । क्षयमार्गस्थिते सोमे कुर्वीत दशमीयुता "॥ इति।

---

१ ख–विद्धाधिका द्वादशीहीनेति ।

**स्मृत्यंतरेऽपि—**

" एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम् ॥

"कलार्धेनापि विद्धा स्याद्दशम्यैकादशी यदा । तदा त्वेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्" ॥ इति ।

पक्षत्रयेऽपि पूर्वत्रोपवासं निषेधति **नारदः—**

" नोपोष्या दशमी विद्धा सदैवैकादशी तिथिः । तामुपोष्य नरो जह्यात्पुण्यं वर्षशतोद्भवम्" ॥ इति । ५

**तथा—**

" दशमीशेषसंयुक्ता गांधार्या समुपोषिता । तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् " ॥ इति ।

एवमन्यान्यपि वचनानि विद्धानिषेधपराण्यत्रैव विषये योजनीयानि ।

विद्धादिका द्वादशीहीनेति पक्षे पूर्ववत् गृहियत्योर्व्यवस्था द्रष्टव्या । तदाह **प्रचेताः—**

" एकादशी विवृद्धा चेच्छुक्ले कृष्णे विशेषतः । उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही " ॥ इति । १०

न चैतच्छुद्धाधिक्ये चरितार्थमिति शंकनीयं बाधकाभावेन विद्धाधिक्येऽपि तद्वचनप्रवृत्तेर्निवारयितु-मशक्यत्वात् । विद्धसमा द्वादशीसमा विद्धसमा द्वादशीहीना विद्धहीना द्वादश्यधिका विद्धहीना द्वादशीसमा विद्धहीना द्वादशीहीनेति पंचसु पक्षेषु विद्धैकादश्येवोपोष्या । तथा च **स्मृत्यंतरे—**

"एकादशी न लभ्येत सकला द्वादशी भवेत् । उपोष्या दशमी विद्धा ऋषिरुद्दालकोऽब्रवीत्" ॥ इति ।

**ऋष्यशृंगः—** १५

" सर्वत्रैकादशी कार्या दशमीमिश्रिता नरैः । प्रातर्भवतु वाऽमा वा तस्यां नित्यमुपोषणम्" ॥ इति ।

**तथा—**

" त्रयोदश्यां न लभ्येत द्वादशी यदि किंचन । उपोष्यैकादशी तत्र दशमीमिश्रिता त्वपि " ॥ इति ।

**विष्णुरहस्येऽपि—**

" एकादशी भवेत्काचिद्दशम्या दूषिता तिथिः । वृद्धिपक्षे भवेद्दोषः क्षयपक्षे तु पुण्यदा "॥ इति । २०

विद्धैकादश्याः क्षये सति पूर्वैवोपोष्येत्यर्थः । अत्र पक्षपंचके परदिनोपवासे सति त्रयोदश्यां पारणं प्रसज्येत । तच्च निषिद्धम् । तथा च **भविष्यत्पुराणे—**

" पारणं तु त्रयोदश्यां यः करोति नृपोत्तम । द्वादशद्वादशीर्हंति नात्र कार्या विचारणा " ॥ इति ।

**ऋष्यशृंगः—**

" पारणाय न लभ्येत द्वादशी यदि कुत्रचित् । तदानीं दशमी विद्धाऽप्युपोष्यैकादशी तिथिः "॥ इति । २५

**विष्णुरहस्येऽपि—**

"द्वादशीतिथिरल्पाऽपि यदि न स्यात्परेऽहनि । दशमीमिश्रिता कार्या न दोषोऽस्तीति वेधसः"॥ इति ।

**वचन**मिति शेषः । विद्धसमा द्वादशीसमा विद्धसमा द्वादशीहीनेति पक्षद्वये पौर्वापर्येण गृहि-यत्योर्व्यवस्था **कालादर्शकारेण** प्रतिपादिता 'तत्पूर्वे तु व्यवस्थिते' इति । अत्र प्रमाणं चिंत्यम् ।

सर्वमेतत्संगृह्य दर्शयति **कालनिर्णयकारः—**" शुद्धाविद्धयोरुभयोरप्येष निर्णयसंग्रहः । एका- ३०
दशीद्वादश्योरुभयोरपि वृद्धौ परेद्युरुपवासः द्वयोरप्यवृद्धौ पूर्वेद्युः । एकादशीमात्रवृद्धौ गृहियत्यो-र्व्यवस्था पूर्वेद्युर्गृहस्थः उत्तरेद्युर्यतिः । द्वादशीमात्रवृद्धौ शुद्धायां सर्वेषां पूर्वेद्युः विद्धायां परेद्युरिति । दिनत्रयविषयाणि कानिचिद्वचनान्युपलभ्यंते । तदाह **नारदः—**

"यदि दैवात्तु संसिध्येदेकादश्यां तिथित्रयम् । तत्र क्रतुशतं पुण्यं द्वादशीपारणे भवेत् " ॥ इति ।

**कौर्मे**—

" द्विस्पृगेकादशी यत्र तत्र संनिहितो हरिः । तामेवोपवसेत्काममकामो विष्णुतत्परः " ॥ इति ।
अत्राद्यंतयोर्दशमीद्वादश्योर्मध्ये एकादशीत्येतादृशं दिनत्रयं यदा प्राप्नोति तदा परतो द्वादशी वृद्धिरवृद्धिश्चेत्युभयं संभवति । तत्र यद्यवृद्धिः तदा यथोक्तं दिनत्रयमुपोष्यम् । तदुक्तं **पुराणांतरे**—

५ " दिनत्रयमृते देवि नोपोष्या दशमीयुता । सैवोपोष्या सदा पुण्या परतश्चेत्त्रयोदशी " ॥ इति ।
द्वादशीवृद्धौ एकादशी यदा लुप्तेत्यनेन **व्यासवचनेन** परेद्युरुपवासः कर्तव्यः । यदा त्वाद्यंतयोरेकादशीत्रयोदश्योर्मध्ये द्वादशीत्येतादृशं दिनत्रयं तदा गृहस्थानां पूर्वदिन उपवासः । परदिने निषेधात् । तथा **कौर्मे**—

" एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः " ॥ इति ।

१० **पाद्मेऽपि**—

" एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्र्यहस्पृक्तदहोरात्रं नोपोष्यं तु सुतार्थिभिः " ॥ इति ।
पुत्रपौत्रसमन्वितः सुतार्थिभिरिति विशेषणाद्यतीनामत्र विषये परदिन एवोपवासः । एतदेवाभिप्रेत्याह **नारदः**—

" एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥

१५ "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिस्पृशी नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति" ॥ इति ।

**कौर्मेऽपि**—

" द्विस्पृगेकादशी यत्र तत्र संनिहितो हरिः । पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणम् " ॥ इति ।
वैष्णवानामपि परदिन एवोपवासः " नैवोपोष्या वैष्णवेन " इति पूर्वदिनोपवासस्य निषिद्धत्वात् ।
यत्तु **स्मर्यते**—

२० "आदित्येऽहनि संक्रांत्यां व्यतीपाते दिनत्रये । पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही" ॥ इति ।

यदपि **मत्स्यवचनम्**—

" दिनक्षये तु संक्रांत्यां ग्रहणे चंद्रसूर्ययोः । उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः ॥

" द्वौ तिथ्यंतावेकवारे यस्मिन्स स्याद्दिनक्षयः " ॥ इति । अत्र दिनक्षयादिषूपवासनिषेधो दिनक्षयादिनिमित्तकः नैकादशीनिमित्तकः । तदुक्तं **कालादर्शे**—

२५ " संक्रात्यादिनिषेधश्च संक्रात्यादिनिमित्तकः । उपवासं निषेधन्ति न ते त्वैकादशीव्रतम् " ॥ इति ।

**कात्यायनः**—

" तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृतः । प्रयुक्त्यंतरयुक्तस्य न विधिर्न निषेधनम् " ॥ इति ।

**जैमिनिरपि**—

" तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः । नानुषंगकृतो ग्राह्यो यतो नित्यमुपोषणम् " ॥ इति ।

३० अयमर्थः—एकादश्युपवासस्य नित्यत्वात्संक्रान्त्याद्युपवासस्य काम्यत्वात्काम्योपवासनिषेधेन नित्योपवासनिषेधो न सिध्यतीति । काम्योपवासश्च **वसिष्ठेनोक्तः**—

" एकस्मिन्सावने त्वन्हि तिथीनां त्रितयं यदा । तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ॥

" अमावास्या द्वादशी च संक्रांतिश्च विशेषतः । एताः प्रशस्तास्तिथयो भानुवारस्तथैव च ॥

" अत्र स्नानं जपो होमो देवतानां च पूजनम् । उपवासस्तथा दानमेकैकं पावनं स्मृतम् " ॥ इति ।

**पितामहस्तु** दिनक्षय एकादश्युपवासं निषेधति—
" एकादश्यां दिनक्षय उपवासं करोति यः। तस्य पुत्रा विनश्यंति मघायां पिंडदो यथा "॥ इति ।
ईदृशे विषये व्यवस्था दर्शिता **कालनिर्णये**—
" उपवासे निषिद्धे तु भक्ष्यं किंचित् प्रकल्पयेत् । न दुष्यत्युपवासोऽत्र उपवासफलं भवेत् ॥
" नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथांबुवाऽऽज्यम् । ५
" यत्पंचगव्यं यदि वाऽपि वायुः प्रशस्तमत्रोत्तरमुत्तरं च " ॥ इति । **स्मृत्यंतरे**—
" अष्टैतान्यव्रतघ्नानि आपो मूलं घृतं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् " ॥ इति ।
एवं कृष्णैकादश्यां गृहस्थस्योपवासे निषिद्धे भक्ष्यं प्रकल्पनीयम् । तत्रोपवासं निषेधति **कात्यायनः**—
" एकादशीषु कृष्णासु रविसंक्रमणे तथा । चंद्रसूर्योपरागे च न कुर्यात्पुत्रवान्गृही " ॥ इति । १०
**गौतमः**—
" आदित्येऽहनि संक्रात्यामसितैकादशीषु च । व्यतीपाते कृते श्राद्धे पुत्री नोपवसेत् गृही "॥ इति ।
**पाद्मेऽपि**—
" संक्रात्यामुपवासेन पारणेन युधिष्ठिर । एकादश्यां च कृष्णायां ज्येष्ठपुत्रो विनश्यति " ॥ इति ।
**नारदोऽपि**— १५
" इंदुक्षयेऽर्कसंक्रांतौ एकादश्यसिते रवेः । उपवासं न कुर्वीत यदीच्छेत्संततिं ध्रुवम् " ॥ इति ।
यत्तु **कौर्मवचनम्**—" एकादश्यां न भुंजीत पक्षयोरुभयोरपि " ॥ इति । यदपि **विष्णुधर्मोत्तरे वचनम्**—
" स ब्रह्महा स गोघ्नश्च स्तेयी च गुरुतल्पगः । एकादश्यां तु यो भुंक्ते पक्षयोरुभयोरपि"॥ इति ।
यत्तु **कूर्मवचनम्**— २०
" यथोत्तरे दक्षिणे वा अयने चैव कीर्तिते । तुल्यं पुण्यमवाप्नोति द्वादश्योरुभयोरपि " ॥ इति ।
" सायंप्रातर्यथा सन्ध्ये सायंप्रातर्यथाहुती । तथा सितासिते पुण्ये द्वादश्यौ धर्मतः समे" ॥ इति ।
यानि चान्यान्येतादृशानि शुक्लकृष्णैकादश्युपवासप्रतिपादकानि तानि सर्वाणि वानप्रस्थयतिविधवाविषयाणि । तदुक्तं **कालादर्शे**—
" उपोष्यैकादशी कृष्णा शुक्लावदिति वादिनः । विधवाविपिनस्थादिविषयत्वेन सार्थकम्"॥ इति । २५
**कौर्मेऽपि**—"एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही"॥
**स्कान्देऽपि**—"एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । वानप्रस्थो यतिश्चैव शुक्लामेव सदा गृही"॥ इति
नैमित्तिककाम्योपवासौ कृष्णायामपि कर्तव्यौ । तत्र नैमित्तिकं **स्मृत्यंतरे** पठ्यते—
" शयनिबोधनी मध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन "॥ इति।
काम्योपवासस्तु **मात्स्ये** दर्शितः— ३०
" एकादश्यां तु कृष्णायामुपोष्य विधिवन्नरः । पुत्रानायुः समृद्धिं च सायुज्यं च समृच्छति " ॥ इति ।
**स्कांदेऽपि**—" पितॄणां गतिमन्विच्छन् कृष्णायां समुपोषयेत् " ॥ इति । **सनत्कुमारोऽपि**—
" भानुवारेण संयुक्ता कृष्णा संक्रातिसंयुता । एकादशी सदोपोष्या सर्वसंपत्करी तिथिः "॥ इति ।

**श्रवणद्वादशीनिर्णयः** । यदा द्वादश्यां श्रवणनक्षत्रं भवेत्तदा शुद्धैकादशीमपि परित्यज्य द्वादश्यामेवोपवसेत् । तथा च **नारदः**—

" शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता । तयोरेवोपवासश्च त्रयोदश्यां तु पारणम् ॥
"एकादश्यां त्वविद्धायां द्वादश्यां श्रवणं यदि । उपोष्या द्वादशी पुण्या सर्वपापक्षयावहा" ॥ इति ।

५ **स्मृत्यंतरेऽपि**—

" एकादशीं परित्यज्य द्वादशीं समुपोषयेत् । पूर्वोपवासजं पुण्यं सर्वं प्राप्नोत्यसंशयम् " ॥ इति ।
शक्तस्तूपवासद्वयं कुर्यात्

" एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् । तत्र द्विधोपवासः स्यादुभयोर्देवता हरिः " ॥ इति ।
अत्र देवतैक्यात्पूर्वोपवासस्य पारणं नास्तीत्युक्तं भवति ।

१० विद्धायामपि द्वादश्यां फलाधिक्यमुक्तं **स्मृत्यंतरे**—

" द्वादश्येकादशीयुक्ता तत्र च श्रवणं यदि । सा विष्णुशृङ्खला ज्ञेया सायुज्यफलदायिनी " ॥

**गौतमोऽपि**—

" द्वादशीं श्रवणर्क्षं च स्पृशेदेकादशी यदि । स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञकः " ॥ इति ।
इयं च श्रवणद्वादशी नित्या

१५ " द्वादशीं श्रवणोपेतां यो नोपोष्यति दुर्मतिः । पञ्चसंवत्सरकृतं पुण्यं तस्य विनश्यति " ॥
इत्यकरणे प्रत्यवाय**स्मरणात्** । काम्यत्वमपि **मार्कण्डेय** आह—

" द्वादश्यामुपवासेन सिद्धार्थो भूप सर्वशः । चक्रवर्तित्वमखिलं संप्राप्नोत्यखिलां श्रियम् " ॥

यत्तु **वचनम्**—

" नभस्यशुक्लद्वादश्यां नक्षत्रं श्रवणं यदि । श्रवणद्वादशी नाम सा प्रोक्ता मुनिपुंगवैः " ॥ इति ।

२० तद्वामनजयंत्यभिप्रायम्

" मासि भाद्रपदे शुक्लद्वादशी श्रवणान्विता । उपोष्या वामनप्रीत्यै जातस्तत्र यतो हरिः " ॥ इति **स्मरणात्**। "शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता" इति **वचनाद्यदाकदाचिदपि** श्रवणद्वादशीसंभवे तत्रोपवासः कार्य एव । एतच्च श्रवणद्वादशीव्रतं न तिथिप्रधानं

"याः काश्चित्तिथयः पुण्याः प्रोक्ता नक्षत्रयोगतः।तास्वेव तद्व्रतं कुर्याच्छ्रवणद्वादशीं विना"॥इति **स्मृतेः**।

२५ नक्षत्रप्राधान्येऽपि इतरनक्षत्रोपवासवन्नस्तमयव्यापि नक्षत्रं ग्राह्यम्

" यस्मिन्नस्तंगतः सूर्यो निशि यद्युतमिंदुना । तदैवोपवसेदृक्षे नक्षत्रं श्रवणं विना " ॥ इति श्रवणपर्युदासात् । अतः " उदये त्रिमुहूर्तस्थं नक्षत्रं व्रतदानयोः " इति **वचनादुदयादित्रिमुहूर्त**-व्यापिश्रवणनक्षत्रं किंचित् द्वादशीस्पृष्टं यदि ग्राह्यम् । त्रिमुहूर्तव्याप्त्यभावे पूर्वेद्युरेवोपवासः । द्वादशीयुक्तस्य श्रवणस्य दिनद्वये त्रिमुहूर्तव्यापित्वे पूर्वदिन उपवासः । तत्र नक्षत्रस्य पूर्णत्वात् ।

३० श्रवणद्वादश्युपवासे त्रयोदश्यामेव पारणं कार्यं " त्रयोदश्यां तु पारणम् " इत्युक्तत्वात् । एकादश्युपवासे तु हरिवासरवर्जितद्वादश्यां पारणं कार्यम्

" चतुर्मुहूर्तं द्वादश्यामाद्यमेकादशीतिथौ । अन्ते चतुर्मुहूर्तं यत् तत्कालं हरिवासरम् ॥
" महादोषकरं चान्नं संप्राप्ते हरिवासरे । न कार्यं पारणं तत्र विष्णुप्रीणनतत्परैः " ॥ इति **स्मृतेः** ।
**यदा त्रयोदश्यां द्वादश्याः कलाद्वयं कलात्रयं वा संभवति तदा द्वादशीकाल एव पारणं कुर्यात्तदुक्तं**

**नारदीये**—

"एकादश्याः कला ह्येका द्वादश्यास्तु कलाद्वयम्। द्वादशद्वादशीर्हंति त्रयोदश्यां तु पारणम्" ॥ इति।

**स्मृत्यंतरेऽपि**—

"कलाद्वयं त्रयं वापि द्वादशीं न त्वतिक्रमेत्। पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता"॥ इति।

**द्वादश्यां माध्याह्निककालः**। द्वादशीकाले यदा पारणं तदा तत्प्रागेव सर्वाः क्रियाः ५ कर्तव्याः। तदुक्तं **नारदीये**—

" अल्पायामपि विप्रेंद्र द्वादश्यामरुणोदये। स्नानार्चनक्रियाः कार्या दानहोमादिसंयुताः "॥ इति।

**गारुडपुराणेऽपि**—

"यदा त्वल्पा द्वादशी स्यादपकर्षो भुजेर्भवेत्। प्रातर्मध्यान्हिकस्यापि तत्र स्यादपकर्षणम्"॥ इति।

**स्कांदेऽपि**— १०

"यदा भवेदतीवाल्पा द्वादशी पारणादिने। उषःकाले द्वयं कुर्यात्प्रातर्माध्यान्हिकं च तत्"॥ इति। उदितहोमिनोऽग्निहोत्रिणो अग्निहोत्रहोमानंतरं पारणं कार्यम् ' विप्रतिषेधे श्रुतिलक्षणं बलीय ' इति **स्मरणात्**। न च वाच्यम्

" आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः। अश्नंत एव सिध्यंति नैषां सिद्धिरनश्नताम् " ॥

*इत्यापस्तंबस्मरणादाहिताग्नेरुपवास एव नास्तीति "ब्रह्मचार्याहिताग्निश्च त्यजेन्नैकादशीव्रतम्"इति १५ **स्मृतेः**। **आपस्तंब**वचनस्य एकादश्यव्यतिरिक्तविषयत्वावगमात् कालयोर्भोजनमिति वचन-प्राप्तं यत्कालद्वयभोजनं तत्र नियमाभावप्रतिपादनपरत्वाच्च द्वादशीकाले पारणासंभवे अद्भिः पारणं कुर्यात्। तदाह **कात्यायनः**—

"संध्यादिकं भवेन्नित्यं पारणं तु निमित्ततः। अद्भिस्तु पारयित्वाऽथ नैत्यकांते भुजिर्भवेत्"॥ इति।

**देवलोऽपि**— २०

"संकटे विषमे प्राप्ते द्वादश्यां पारणं कथम्। अद्भिस्तु पारणं कुर्यात् पुनर्भुक्तं न दोषकृत् ॥ इति। " अशितानशिता यस्मादापो विद्वद्भिरीरिताः। अम्भसा केवलेनैव करिष्ये व्रतपारणम् " ॥ इति संकल्प्य गायत्र्या अभिमन्त्र्य त्रिवारं चुलकोदकं " प्रणवेन पिबेत् तोयं जलपारणमुच्यते ॥ " आपः पवित्रममलं पावनाः सर्वकर्मसु। व्रतलोपभयादेतत्पारणार्थं पिबाम्यहम् " ॥ इति।

**एकादश्युपवासे अधिकारिणः**। एकादश्युपवासे अधिकारिणं दर्शयति **कात्यायनः**— २५

" अष्टवर्षाधिको मर्त्यो ह्यसंपूर्णाशीतिवत्सरः। एकादश्यामुपवसेत्पक्षयोरुभयोरपि " ॥ इति।

**नारदः**—

"अष्टाब्दादधिको मर्त्यो ह्यपूर्णाशीतिहायनः। भुंक्ते यो मानवो मोहादेकादश्यां स पापकृत्"॥ इति।

**पतिमत्या उपवासनिषेधः**। पतिमत्यासूपवासं निषेधति **विष्णुः** ( २५।१६ )—

" पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत्। आयुष्यं हरते भर्तुर्नरकं चैव गच्छति " ॥ इति। ३०

**मनुरपि** ( ५।१५४ )—" नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् " ॥ इति। पत्युरनुमत्या पत्नी व्रतादिष्वधिकारिणी भवेत्। तदाह **कात्यायनः**—

" भार्या भर्तुर्मतेनैव व्रतादीनाचरेदिति " ॥ **मार्कंडेयः**—

" नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा। निष्फलं तु भवेत्तस्या यत्करोति व्रतादिकम्"॥ इति।

*ध. सू. २।७।१७।१३। १ व-धि।

**पराशरोऽपि—**

" अपृष्ट्वा चैव भर्तारं या नारी कुरुते व्रतम् । सर्वं तद्राक्षसान् गच्छेदित्येवं मनुरब्रवीत् "॥ इति ।

**उपवासासमर्थविषयः** । उपवासासमर्थस्तु एकभक्तादीनि कुर्यात्। तथा च **कात्यायनः—**

" उपवासे त्वशक्तानामशीतेरूर्ध्वजीविनाम् । एकभक्तादिकं कार्यमाह बोधायनो मुनिः " ॥ इति ।

५ **मार्कंडेयः—**

" एकभक्तेन नक्तेन तथैव याचितेन च । मुन्यन्नेन च दानेन न निर्द्वादशिको भवेत् " ॥ इति ।

**स्मृत्यन्तरेऽपि—**

" एकभक्तेन नक्तेन बालवृद्धातुरः क्षपेत् । पयोमूलं फलं वाऽपि न निर्द्वादशिको भवेत् " ॥

**भविष्यत्पुराणेऽपि—**

१० " एकादश्यामुपवसेन्नक्तं वापि समाचरेत् । अथवा विप्रमुख्येभ्यो दानं दद्यात्स्वशक्तितः" ॥ इति ।

एकभक्तादावप्यशक्तः प्रतिनिधिना कारयेत् । तथा च **विष्णुरहस्ये—**

" असामर्थ्ये शरीरस्य व्रते च समुपस्थिते । कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् " ॥ इति ।

**पैठीनसिः—**

" भार्या भर्तुर्व्रतं कुर्याद्भार्यायाश्च पतिर्व्रतम् । असामर्थ्ये परस्ताभ्यां व्रतभंगो न जायते "॥ इति ।

१५ **स्कांदेऽपि—**" पुत्रं वा विनयोपेतं पत्नीं वा भ्रातरं तथा ।

"एषामभाव एवान्यं ब्राह्मणं विनियोजयेत् । भगिनीमथवा शिष्यं ब्राह्मणं दक्षिणादिभिः"॥ इति ।

**कात्यायनः—**"पितृमातृस्वसृभ्रातृगुर्वर्थे च विशेषतः । उपवासं प्रकुर्वाणः पुण्यं क्रतुशतं लभेत् ॥

" दक्षिणा नात्र दातव्या शुश्रूषा विहिता च सा । नारी च पतिमुद्दिश्य एकादश्यामुपोषिता ॥

" पुण्यं क्रतुशतं प्राहुर्मुनयः पारदर्शनाः । उपवासफलं तस्य पतिः प्राप्नोत्यसंशयम् " ॥ इति ।

२० **स्मृत्यंतरेऽपि—**

" पितृमातृपतिभ्रातृश्वश्रूगुर्वादिभूभुजाम् । अदृष्टार्थमुपोषित्वा स्वयं च फलभाग्भवेत् ॥

" मातामहादीनुद्दिश्य एकादश्यामुपोषणे । कर्त्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः ॥

" यमुद्दिश्य कृतं सोऽपि संपूर्णफलमाप्नुयात् " ॥ इति । प्रतिनिधौ कश्चिद्विशेषः **स्मर्यते—**

"काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः । काम्येऽप्युपक्रमादूर्ध्वं केचित्प्रतिकृतिं विदुः"॥ इति

२५ उपवासाकरणे प्रायश्चित्तं **स्मर्यते—**

" अर्के पर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा । एकादश्यामहोरात्रं भुक्त्वा चांद्रायणं चरेत् " ॥

**सूतकादावुपवासविचारः** । सूतकादौ उपवासमात्रं कार्यमाह **पुलस्त्यः—**

" सूतके च नरः स्नात्वा प्रणम्य मनसा हरिम् । एकादश्यां न भुंजीत व्रतमेतन्न लुप्यते ॥

" मृतकेऽपि न भुंजीत ह्येकादश्यां सदा नरः । एकादश्यां न भुंजीत नारी दृष्टे रजस्यपि" ॥ इति ।

३० काम्येऽपि दानार्चनरहितमुपवासमात्रं कार्यम् । एतदुक्तं **कौर्मे—**

" काम्योपवासे प्रक्रांते त्वन्तरा मृतसूतके । तत्र काम्यव्रतं कुर्यात् दानार्चनविवर्जितम् ॥

" सूतकांते नरः स्नात्वा पूजयित्वा जनार्दनम् । दानं दत्वा विधानेन व्रतस्य फलमश्नुते ॥

" संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम् । पंचमेऽहनि शुद्धा स्याद्दैवे पित्र्ये च कर्मणि " ॥

**एकादश्यां नित्यनैमित्तिकश्राद्धे उपवासभेदः** । एकादश्यां सांवत्सरिकश्राद्धे संप्राप्ते

३५ श्राद्धं कृत्वा पितृसेवितशेषं समाघ्रायोपोषणं कुर्यात् । तदाह **कात्यायनः—**

" उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् । उपवासं ततः कुर्यादाघ्राय पितृसेवितम् "॥ इति ।

ननु " भुंजीतैव कृते श्राद्धे पुत्री नोपवसेद् गृही " ॥ इति । तथा—
" श्राद्धं कृत्वा तु यो विप्रो न भुंक्ते तु कदाचन । देवा हव्यं न गृह्णंति कव्यानि पितरस्तथा " ॥
इत्यादिवचनविरोधः स्यात् । मैवम् । आघ्राणेनापि भोजनकार्यस्य सिद्धेः तस्य भोजनकार्ये विधानात् ।
अनुकल्पं कुर्वन्नशक्तस्तु भुंजीत
"अनुकल्पं यदा कुर्वन्नशक्तः पक्षयोर्द्वयोः । एकादश्यां तु भुंजीत श्राद्धं कृत्वा दिवैव च"॥ इति **स्मृतेः**। ५
कृष्णैकादश्यां गृहस्थस्य ओदनव्यतिरिक्तपितृशेषभोजनेऽप्यदोषः । तस्य शुक्लैकादश्यामेव
नित्योपवासविधानात् । कृष्णैकादश्यामुपवासनिषेधेन भक्ष्यविधानाच्च । **ब्रह्माण्डपुराणे** तु—
" कर्ता नोपवसेच्छ्राद्धे पित्र्येऽप्येकादशीव्रते । तयोरप्यधिकं ब्रूयुः पितृशेषं महर्षयः " ॥ इति ।
कर्तृग्रहणात् ज्ञातीनामाघ्राणमेव
" कर्तृभ्योऽन्यैर्न भोक्तव्यं श्राद्धे प्राप्ते हरेर्दिने । पितृशेषं तमाघ्राय उपवासफलाप्तये " ॥ इति १०
भोक्तुरपि दोषो नास्तीत्युक्तं **तत्रैव**—
" पात्राभावे द्विजः श्राद्धे भुञ्जीयाद्धरिवासरे । नोपवासव्रतघ्नं तन्नो चेत्तच्छ्राद्धहा भवेत् ॥
" परदिने तु कर्तव्या पारणा द्वादशीदिने । उपवासफलं सम्यक् प्राप्नोति व्रतभाङ् नरः ॥
"एकादश्यां न भुंजीत कदाचिदपि मानवः । स्वयं प्रार्थ्य न भुङ्क्ते चेत् प्रार्थितोऽन्यैर्न दोषभाक्"॥इति ।

**काम्यैकादशीव्रतानुष्ठानक्रमः** । अथमिह काम्यव्रतानुष्ठानक्रमः । प्रथमं दशम्यामेक- १५
भुक्तं कृत्वा दंतधावनं कुर्यात् । " दशम्यामेकभुक् भूत्वा खादयेद्दंतधावनम् " इति **स्मरणात्** ।
दशम्यां रात्रौ नियम उक्तो **ब्रह्मवैवर्ते**—
" प्राप्ते हरिदिने सम्यक् विधाय नियमं निशि । दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतम् " ॥
**नारदीये**—
" अक्षारलवणाः सर्वे हविष्यान्ननिषेवणाः । अवनीतल्पशयनाः प्रियासंगविवर्जिताः " ॥ इति । २०
ततः प्रातरुत्थायैकादश्यां बाह्यांतरशुद्धिं विदध्यात् । तत्प्रकारस्तु **कालनिर्णये**ऽभिहितः—
" शरीरमंतःकरणोपघातं वाचश्च विष्णुर्भगवानशेषम् ।
" शमं नयत्वस्तु ममेह शर्म पापादनंते हृदि संनिविष्टे ॥
" अंतःशुद्धिं बहिःशुद्धिं शुद्धो धर्ममयोऽच्युतः । स करोतु ममैतस्मिन् शुचिरेवास्मि सर्वदा ॥ ।
" बाह्योपघातादनघो बोद्धा च भगवानजः । शमं नयत्वनंतात्मा विष्णुश्चेतासि संस्थितः "॥ इति । २५
अनंतरं व्रतसंकल्पं कुर्यात् । तत्र मंत्रमाह **विष्णुः**—
" एकादश्यां निराहारः स्थित्वाऽहमपरेऽहनि । भोक्ष्यामि पुंडरीकाक्ष शरणं मे तवाच्युत ।
" इत्युच्चार्य ततो विद्वान्पुष्पांजलिमथार्पयेत् " ॥ इति ।
अनंतरकृत्यमाह **कात्यायनः**— " गृहीत्वौदुंबरं पात्रं वारिपूर्णमुदङ्मुखः ।
" अष्टाक्षरेण मंत्रेण त्रिर्जप्तेनाभिमंत्रितम् । उपवासफलप्रेप्सुः पिबेत्पात्रगतं जलम् " ॥ इति । ३०
औदुंबरं ताम्रपात्रम् । **ब्रह्मपुराणे**—
" संपूज्य विधिवद्विष्णुं श्रद्धया सुसमाहितः । गंधैः पुष्पैस्तथा धूपैर्दीपैर्नैवेद्यकैः वरैः ।
"एवं संपूज्य विधिवद्रात्रौ कृत्वा तु जागरम् । याति विष्णोः परं स्थानं नरो नास्त्यत्र संशयः"॥ इति ।

द्वादश्यां कर्तव्यमाह **कात्यायनः**—" प्रातः स्नात्वा हरिं पूज्य उपवासं समापयेत् ।
" अज्ञानतिमिरांधस्य व्रतेनानेन केशव । प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ॥
" मंत्रं जपित्वा हरये निवेद्योपोषणं व्रती । द्वादश्यां पारणं कुर्याद्वर्जयित्वा ह्युपोतकीम् " ॥ इति ।
**बृहस्पतिः**—
५ " सायमाद्यंतयोरन्होः सायं प्रातश्च मध्यमे । उपवासफलप्रेप्सुर्जह्याद्भुक्तचतुष्टयम् " ॥ इति ।
**नित्योपवासविषयः** । नित्योपवासप्रकारमाह **कात्यायनः**—
" नित्योपवासी यो मर्त्यः सायंप्रातर्भुजिक्रियाम् । वर्जयेन्मतिमान्विप्रः संप्राप्ते हरिवासरे ।
" विशेषनियमाशक्तोऽहोरात्रं भुक्तवर्जितम् । शक्तिमांस्तु पुनः कुर्यान्नियमं सविशेषणम् " ॥ इति ।
**कालादर्शेऽपि**—" जह्याद्भक्तं द्वयं नित्ये काम्ये भक्तचतुष्टयम् " ॥ इति ।
१० **उपवासे वर्ज्यानि** । उपवासे वर्ज्यानाह **विष्णुः**—
" असकृज्जलपानं च दिवा स्वापं च मैथुनम् । तांबूलचर्वणं मांसं वर्जयेद्व्रतवासरे " ॥ इति ।
**वसिष्ठः**—
" उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् । दंतानां काष्ठसंयोगो हंति सप्त कुलानि च " ॥ इति ।
दंतधावने प्रायश्चित्तमुक्तं **विष्णुरहस्ये**—
१५ " श्राद्धोपवासदिवसे खादित्वा दंतधावनम् । गायत्र्याः शतसंपूतमंबु प्राश्य विशुध्यति" ॥ इति ।
**हारीतः**—" पतितपाषंडनास्तिकसंभाषणमनृताश्लीलादिकमुपवासे वर्जयेत् " ॥ इति ।
**विष्णुधर्मे**—" असंभाष्यांस्तु संभाष्य तुलस्यतसिकादलम् ॥
" द्वादश्यामच्युतफलमागस्त्यं पत्रमेव वा । आमलक्याः फलं वापि पारणे प्राश्य शुध्यति " ॥ इति ।
**बृहस्पतिः**—
२० " दिवा निद्रां परान्नं च पुनर्भोजनमैथुने । क्षौद्रं कांस्यामिषे तैलं द्वादश्यामष्ट वर्जयेत् ॥
" कृत्वा चैवोपवासं तु योऽश्नाति द्वादशीदिने । नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम् ॥
" द्वादश्यामाद्यपादस्तु कीर्तितो हरिवासरः ॥
" महादोषकरं चान्नं संप्राप्ते हरिवासरे । न कार्यं पारणं तत्र विष्णुप्रीणनतत्परैः " ॥
**स्मृत्यंतरे**—"चतुर्मुहूर्तं द्वादश्यामाद्यमेकादशीतिथौ । अंते चतुर्मुहूर्तं यत् तत्कालो हरिवासरः"॥ इति ।
२५ **इत्येकादशीनिर्णयः** । **द्वादशीनिर्णयः** । अथ द्वादशी निर्णीयते । सा च पूर्वविद्धा ग्रहीतव्या ।
तदुक्तं **स्कांदे**—
"द्वादशी च प्रकर्तव्या एकादश्या युता विभो । सदा कार्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः" ॥ इति ।
उत्तरविद्धां प्रतिषेधति **बृहद्वसिष्ठः**—
" द्वितीया पंचमी चैव दशमी च त्रयोदशी । चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी " ॥ इति ।
३० द्वादश्यां च काम्योपवासो **मार्कंडेयेन** दर्शितः—
" द्वादश्यामुपवासेन सिद्धार्था भूप सर्वशः । चक्रवर्तित्वमतुलं संप्राप्ता अतुलां श्रियम् " ॥ इति ।
**त्रयोदशीनिर्णयः** । अथ त्रयोदशी निर्णीयते । सा च शुक्लकृष्णपक्षभेदेन व्यवतिष्ठते ।
तत्र शुक्लत्रयोदशी पूर्वविद्धा ग्राह्या । तदुक्तं **ब्रह्मवैवर्ते**—
" त्रयोदशी प्रकर्तव्या द्वादशीसहिता मुने । भूतविद्धा न कर्तव्या दर्शः पूर्णा कदाचन " ॥ इति ।

---

१ घ-द् ।

**निगमे**—

"षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी । एताः परयुताः पूज्याः पराः पूर्वयुतास्तथा " ॥ इति । अत्र कृष्णपक्ष इति विशेषणात् पूर्वविद्धावचनस्य शुक्लपक्षविषयत्वं परिशिष्यते ।

**चतुर्दशीनिर्णयः** । अथ चतुर्दशी निर्णीयते । नृसिंहचतुर्दशी रात्रिव्यापिनी ग्राह्या । नृसिंहस्य सायंकाले आविर्भावात् । ५

" मधुश्रवणमासस्य शुक्ला या च चतुर्दशी । सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी" ॥ इति वचनात् । परा अनन्तचतुर्दशी । त्रिमुहूर्तमेव पूर्वाह्णः । तत्र शुक्लचतुर्दशी परविद्धा ग्राह्या । तथा **व्यासः**—" शुक्ला चतुर्दशी ग्राह्या परविद्धा सदा व्रते " इति । **नारदीयेऽपि**—

" तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी । पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता " ॥ इति ।

**अनन्तव्रतम्** । यत्तु भाद्रपदशुक्लचतुर्दश्यामनंतव्रतमुक्तं **भविष्योत्तरे**—तत्र ' दैवे ह्यौदयिकी ग्राह्या " इति वचनेन युग्मशास्त्रादिभिश्चोदयव्यापिनी ग्राह्या । तत्र तिथ्यंतरवत-त्रिमुहूर्तव्याप्तिर्मुख्यः कल्पः । द्विमुहूर्तव्याप्तिरनुकल्पः । यत्तु— १०

" मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे । ददर्श लीला सा स्त्रीणां समूहं रक्तवाससाम् ॥

" चतुर्दश्यामर्चयंतं भक्त्या देवं जनार्दनम् " ॥ इति तत्तु अर्थवादत्वान्न स्वातंत्र्येण कस्यचिदर्थस्य प्रापकं न चात्र मध्याह्नः कर्मांगकालो विहितः । सति प्रमाणांतरे तस्योपोद्बलक-मर्थवादवाक्यं भवति । न चात्र प्रमाणांतरमस्तीति **कालनिर्णये** निरूपितम् । कृष्णचतुर्दशी तु पूर्वयुक्तैव ग्राह्या । तथा **चापस्तंबः**— १५

" कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी । पूर्वविद्धा तु कर्तव्या परविद्धा न कस्यचित्"॥ इति ।

**शिवरात्रिव्रतनिर्णयः** । अथ शिवरात्रिव्रतं निर्णीयते । शिवस्य रात्रिः शिवरात्रिरिति तत्पुरुषसमासेन योगेन प्रवर्त्तमानः शब्दो रूढ्या माघकृष्णचतुर्दशीरूपे कालविशेषे नियम्यते । शिवप्रिया रात्रिर्यस्मिन्व्रत इति बहुव्रीहिसमासेन योगेन प्रवृत्तः शब्दो रूढ्या व्रतविशेषे नियम्यते । यथा पंकजशब्दः पंकाज्जायत इति योगं स्वीकृत्य भेकादिष्वतिप्रसंगो रूढिस्वीकारेण निवार्यते तद्वदत्रापि यौगिकत्वे सति शिवव्रतोपेतेषु त्रयोदश्यादितिथ्यंतरेषु शिवरात्रित्वं प्रसक्तं रूढि-परिग्रहेण निवार्यते । अतः कालविशेषे व्रतविशेषे च योगरूढोऽयं शिवरात्रिशब्दः । २०

तथा च **स्कांदे**— २५

" माघस्य कृष्णपक्षे या तिथिश्चैव चतुर्दशी । तस्या रात्रिः समाख्याता शिवरात्रिः शिवप्रिया ॥

" तस्यां सर्वेषु लिंगेषु तदा संक्रमते हरः । यानिकान्यत्र लिंगानि चराणि स्थावराणि च ॥

" तेषु संक्रमते देवि तस्यां रात्रौ यतो हरः । शिवरात्रिस्ततः प्रोक्ता तेन सा हरवल्लभे " ॥ इति ।

**कामिकेऽपि**—

" माघमास्यसिते पक्षे विद्यते या चतुर्दशी । तद्रात्रिः शिवरात्रिः स्यात्सर्वपुण्यशुभावहा " ॥ इति । ३०

**ईशानसंहितायाम्**—

" शिवरात्रिव्रतं नाम सर्वपापहरं नृणाम् । आचंडालं मनुष्याणां भुक्तिमुक्तिप्रदायकम् " ॥ इति । अनेनास्य सर्वाधिकारित्वमुक्तम् । तच्च शिवरात्रिव्रतमेकादशीवन्नित्यं काम्यं चेत्युभयविधिम् । तत्र नित्यत्वमकरणे प्रत्यवायवीप्सानित्यशब्दैरवगंतव्यम् ।

---

१ लाम-श्री ।

ते च **स्कांदे** पठ्यन्ते— " परात्परतरं नास्ति शिवरात्रिः परात्परा ।
" न पूजयंति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् । जंतुर्जन्मसहस्रेण भ्रमते नात्र संशयः ॥
" वर्षे वर्षे महादेवि नरो नारी पतिव्रता । शिवरात्रौ महादेवं कामं भक्त्या प्रपूजयेत् ॥
" माघकृष्णचतुर्दश्यां यः शिवं संशितव्रतः । मुमुक्षुः पूजयेन्नित्यं स लभेतेप्सितं पदम् " ॥ इति ।
५ काम्यत्वं च फलश्रवणादवगंतव्यम् । तच्च **स्कांदे** पठ्यते—
" शिवं च पूजयित्वा यो जागर्ति च चतुर्दशीम् । मातुः पयोधररसं न पिबेत्स कदाचन ॥
" सर्वान्भुक्त्वा महाभोगान्स मृतो न प्रजायते" ॥ इति ।
काम्यव्रतस्ये**शासनसंहितायां** वर्षसंख्या पठ्यते—
" एवमेतत् व्रतं कुर्यात् प्रतिसंवत्सरं प्रति । द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकं तु वा ॥
१० " सर्वान्कामानवाप्नोति प्रेत्य चेह च मानवः " ॥ इति ।
उपवास जागरणं पूजा चेति त्रयं समप्राधान्येन व्रतस्वरूपम् । तदुक्तं **नागरखंडे**—
" उपवासप्रभावेन बलादपि च जागरात् । शिवरात्रेस्तथा तत्र लिंगस्यापि प्रपूजनात् ॥
" अक्षयाल्लभते भोगाञ्छिवसायुज्यमाप्नुयात् " ॥ इति ।
यत्तु **स्कांदपुराणे** द्वयमेकैकं वा पठ्यते " अथवा शिवरात्रिं च प्रजा जागरणैर्नयेत् ।
१५ " अखंडितव्रतो यो हि शिवरात्रिमुपोषयेत् । सर्वान्कामानवाप्नोति रुद्रेण सह मोदते ॥
" कश्चित्पुण्यविशेषेण व्रतहीनोऽपि यः पुमान् । जागरं कुरुते तत्र स रुद्रसमतां व्रजेत् ॥
" यः पूजयति भक्त्येशमनेकफलतां व्रजेत् " ॥ इति तत् अथवेत्यनुकल्पोपक्रमादशक्तविषयम् ।
प्रदोषनिशीथवेधावत्र ग्राह्यौ । प्रदोषवेधो **वायुपुराणे** दर्शितः—
" त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु । भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत् " ॥ इति ।
२० **कामिकेऽपि**—
"आदित्यास्तमये काले त्वस्ति चेद्या चतुर्दशी । तद्रात्रिः शिवरात्रिः स्यात्सा भवेदुत्तमोत्तमा" ॥ इति ।
**स्मृत्यन्तरेऽपि**
" प्रदोषव्यापिनी ग्राह्या शिवरात्रिश्चतुर्दशी । रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् " इति ॥
निशीथवेधो **नारदीयसंहितायां** दर्शितः—
२५ " अर्धरात्रियुता यत्र माघकृष्णचतुर्दशी । शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत् " ॥ इति ।
**ईशानसंहितायाम्**—
" पूर्वेद्युरपरेद्युर्वा महानिशि चतुर्दशी । व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद्व्रतं नरः ॥
" मम प्रियकरी ह्येषा माघकृष्णचतुर्दशी । महानिश्यन्विता यत्र तत्र कुर्यादिदं व्रतम् " इति ॥
एवं च सति पूर्वेद्युरेव वाऽपरेद्युरेव वा यत्र प्रदोषनिशीथोभयव्याप्तिः तत्र व्रतमाचरणीयम् ।
३० तथा च **स्कांदे**—
" त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः । जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥
" निशाद्वये चर्तुदश्यां पूर्वा त्याज्या शुभान्विता " ॥ इति दिनभुक्तिरस्तमयः । दिनद्वयेऽप्युभय-
व्याप्तिस्तु न संभाव्यते । यामद्वयवृध्यभावात् । दिनद्वयेऽप्युभयव्याप्त्यभावोऽपि न संभवति

यामद्वयक्षयस्याभावात्। एकैकस्मिन्दिने यद्येकैकव्याप्तिः तत्र पूर्वेद्युर्निशीथव्याप्तिः परेद्युः प्रदोषव्याप्तिरित्यत्रैकैकव्याप्तेर्दिनद्वये समानत्वेऽपि जयायोगस्य प्रशस्तत्वाद्दर्शयोगस्य निंदितत्वाच्च पूर्वेद्युरेवोपवासः। त्रयोदशीयोगप्राशस्त्यं दर्शयोगनिंदा च **स्कांदे** पठ्यते—
" कृष्णाष्टमी स्कंदषष्ठी शिवरात्रिश्चतुर्दशी। एताः पूर्वयुताः कार्याः तिथ्यन्ते पारणं भवेत्॥
"महतामपि पापानां दृष्टा वै निष्कृतिः पुरा। न दृष्टा कुर्वतां पुंसां दर्शयुक्तां तिथिं पराम्"॥ इति। ५
यदा पूर्वेद्युर्निशीथादूर्ध्वं प्रवृत्ता चतुर्दशी परेद्युः क्षयवशात् निशीथादर्वागेव समाप्ता तदा पूर्वेद्युः प्रदोषनिशीथव्याप्त्योरुभयोरप्यसंभवात्परेद्युः प्रदोषव्याप्तेरेकस्याः संभवाच्च परविद्धैव ग्राह्या। एतदेवाभिप्रेत्य **स्मर्यते**—
" माघासिते भूतदिनं कदाचिदुपैति योगं यदि पंचदश्याः।
" जयाप्रयुक्तां न तु जातु कुर्यात् शिवस्य रात्रिं प्रियकृच्छिवस्य "॥ इति। १०
यदा पूर्वेद्युः प्रदोषादूर्ध्वं प्रवृत्ता चतुर्दशी परेद्युः क्षयवशात्प्रदोषादर्वागेव समाप्ता तदा परेद्युर्व्याप्तिद्वयाभावात् पूर्वेद्युर्निशीथव्याप्तेः सद्भावेन जयायोगाच्च पूर्वेद्युरेवोपवासः।

**अत्रायं विवेकः**—दिनद्वयेऽपि निशीथव्याप्तौ तदव्याप्तौ च प्रदोषव्याप्तिर्नियामिका। तथा दिनद्वयेऽपि प्रदोषव्याप्तौ तदव्याप्तौ च निशीथव्याप्तिर्नियामिका। एकैकस्मिन्दिने एकैकव्याप्तौ जयायोगो नियामक इति। १५

वारविशेषेण योगविशेषेण च युक्ता त्रिस्पृशा च शिवरात्रिः प्रशस्ता। तथा च **स्कांदे**—
" माघकृष्णचतुर्दश्यां रविवारो यदा भवेत्। भौमो वाऽथ भवेद्देवि कर्तव्यं व्रतमुत्तमम्॥
" शिवयोगस्य योगो वै तद्भवेदुत्तमोत्तमम्। त्रयोदशी कलाऽप्येका मध्ये चैव चतुर्दशी।
" अंते चैव सिनीवाली त्रिस्पृश्यां शिवमर्चयेत् "॥ इति। ननु यदा पूर्वविद्धायामुपवासः तदा परेद्युः किं तिथ्यंते पारणं उत तिथिमध्ये। शास्त्रं तु पक्षद्वयेऽपि समानम्। तत्र तिथ्यंते पारणवचनानि पूर्वोदाहृतानि। तिथिमध्ये पारणवचनं तु **स्कांदे** पठ्यते— २०
" उपोषणं चतुर्दश्यां चतुर्दश्यां तु पारणम्। कृतैः सुकृतलक्षैश्च लभ्यते वाऽथ वा न वा।
" ब्रह्मांडोदरमध्ये तु यानि तीर्थानि संति वै। संस्थितानि भवंतीह भूतायां पारणे कृते।
" तिथीनामेव सर्वासामुपवासव्रतादिषु। तिथ्यंते पारणं कुर्याद्विना शिवचतुर्दशीम् "॥ इति।
बाढं अस्ति द्विविधं शास्त्रम्। तस्य च द्विविधशास्त्रस्य प्रतिपत्प्रकरणोक्तन्यायेन व्यवस्था द्रष्टव्या। २५
यदा यामत्रयादर्वागेव चतुर्दशी समाप्यते तदा तिथ्यंते पारणम्। यदा चतुर्दशी यामत्रयमतिक्रामति तदा चतुर्दशीमध्ये पूर्वाह्णे पारणं कुर्यात्। इति **शिवरात्रिनिर्णयः**।

**पञ्चदशीनिर्णयः**। अथ पंचदशी निर्णीयते। सा च व्रतादौ परविद्धैव ग्राह्या। तथा च **ब्रह्मवैवर्ते**—
" भूतविद्धा न कर्तव्या अमावास्या च पूर्णिमा। वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् "॥ इति ३०
**स्कांदेऽपि**—
" भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत्। वर्जयित्वा तु सावित्रीव्रतं तु शिखिवाहन "॥ इति
सावित्र्या राजकन्यया चीर्णं सावित्रीव्रतम्। तच्च **भविष्योत्तरे** दर्शितम्—
"कथयामि कुलस्त्रीणां महिम्नो वर्धनं परम्। यथा चीर्णं व्रतं पूर्वं सावित्र्या राजकन्यया "॥ इति।
तच्च पौर्णमास्याममावास्यायां च विहितम्। तस्मिन्व्रते पूर्वविद्धा ग्राह्या। ३५

एतदेवाभिप्रेत्य नारदीये—

" दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम्। पूर्वविद्धामकुर्वाणो नरकं प्रतिपद्यते "॥ इति।

दर्शादिश्राद्धकालः श्राद्धकांडे निरूपितः* ।

**इष्टिकालनिर्णयः**। इष्टिकालस्तु निर्णीयते। अत्र गोभिलः—

५ " पक्षांता उपवस्तव्याः पक्षादयो हि यष्टव्याः" इति। अत्रोपवासशब्देनाग्न्युपस्तरणं विवक्षितम्। तस्मिन्क्रियमाणे यजमानसमीपे देवतानां निवासात्। तथा च श्रुतिः (तै. सं. १।६।७)—

" उपास्मिञ्छ्वो यक्ष्यमाणे देवता वसंति एवं विद्वानग्निमुपस्तृणाति " ॥ इति। उपवासशब्दाभिधेयाग्न्युपस्तरणांतस्य पर्वदिनकर्तव्यस्यान्वाधानादेश्चतुरंशवति पर्वणि आद्यास्त्रयोंऽशाः कालाः पर्वणश्चतुर्थोंऽशः प्रतिपद आद्यास्त्रयोंऽशाश्च यागस्य कालः। तदाह लोकाक्षिः—

१० " त्रीनंशानौपसथ्यस्य यागस्य चतुरो विदुः। द्वावंशावत्सृजेदंत्यौ यागे च व्रतकर्मणि "॥ इति।

यागकालं यज्ञपार्श्वोऽप्याह—

" पंचदश्याः परः पादः पक्षादेः प्रथमास्त्रयः। कालः पार्वणयागे स्याद्यांते तु न विद्यते "॥ इति।

वृद्धशातातपोऽपि—

" पर्वणो यश्चतुर्थोंऽश आद्याः प्रतिपदस्त्रयः। यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः "॥ इति।

१५ अत्र प्रातरिति विशेषणात् "सूर्योदयस्योपरि मुहूर्तत्रयं यागस्य मुख्यः कालः" इति कालनिर्णये। प्रतिपदश्चतुर्थांशं निषेधति कात्यायनः—

" न यष्टव्यं चतुर्थेंऽशे यागैः प्रतिपदः क्वचित्। रक्षांसि तद्विलुंपंति श्रुतिरेषा सनातनी"॥ इति।

यदा पर्वप्रतिपदावुदयमारभ्य संपूर्णतिथी भवतः तदा न कोऽपि संदेहः। यदा तु खंडतिथी तदा निर्णयमाह गोभिलः—

२० " आवर्तने यदा संधिः पर्वप्रतिपदोर्भवेत्। तदहर्याग इष्येत परतश्चेत्परेऽहनि ॥

" पर्वप्रतिपदोः संधिरर्वागावर्त्तनाद्यदि। तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ॥

" आवर्तनोत्तरः संधिर्यदि तस्मिन्नुपक्रमः। परेद्युरिष्टिरित्येष पर्वद्वयविनिश्चयः "॥ इति।

लोकाक्षिरपि—

" पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते। उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ॥

२५ " अपराण्हेऽथ वा रात्रौ यदि पर्व समाप्यते। उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते "॥ इति।

अन्हो मध्यं मध्याह्न इति व्युत्पत्तेरावर्तनमत्र मध्यान्हशब्देनाभिधीयते। एवमपराह्णशब्दोऽप्यत्र यौगिकः। न तु पंचधाविभागमाश्रित्य प्रवृत्तः। अत एव गोभिलेनावर्तनशब्दः प्रयुक्तः। शातातपोऽपि—

" पूर्वाह्णे मध्यमे वापि यदि पर्व समाप्यते। तद्दोपवासः पूर्वेद्युः तदहर्याग इष्यते "॥ इति।

३० अह्नः पूर्वो भागः पूर्वाह्णः। अन्होऽपरो भागोऽपराण्हः। अतस्ताभ्यां शब्दाभ्यामावर्तनात् पूर्वोत्तरभागावभिधीयेते कालादर्शेऽपि—" पूर्वप्रतिपदोः संधिर्मध्याह्ने पूर्वतोऽपि वा।

" अन्वाधानं पूर्वदिने तद्दिने याग इष्यते। परतश्चेत्परेह्णीष्टिस्तद्दिनेऽन्वाहितिर्भवेत् "॥ इति।

वाजसनेयिनां पौर्णमास्यां विशेष उक्तस्तत्रैव—

" आवर्तनादधः संधिर्यद्यन्वाधाय तद्दिने। परेद्युरिष्टिरित्याहुर्विप्रा वाजसनेयिनः "॥ इति।

---

*७१८–७४४ पृष्ठे

यदि मध्यान्हात्पूर्वं संधिः स्यात् तदा संधिदिने अन्वाधाय परेद्युरिष्टिः कार्येति वाजसनेयिमतानुवर्तिन आहुरित्यर्थः । तदाह **भाष्यार्थसंग्रहकारः**—

"मध्यंदिनात्स्यादहनीह यस्मिन् प्राक्पर्वणः सन्धिरियं तृतीया ।

"सा सर्विका वाजसनेयिमर्त्यास्तस्यामुपोष्याथ परेद्युरिष्टिः"॥ इति । आवर्तनादूर्ध्वमस्तमयादर्वाग्यदा संधिर्भवति तदा संधिमती तिथिः प्रथमा रात्रौ संधिश्चेत्सा तिथिर्द्वितीया । ५ ते उभे अपेक्ष्य पूर्वाण्हे संधिमतीतिथिस्तृतीया । तत्र पूर्वकालस्याल्पत्वात्सार्वर्तिकेत्युच्यते । एवं च सति वाजसनेयिनां न क्वापि संधिदिनात्पूर्वेद्युरन्वाधानादिकमस्ति । वाजसनेयिव्यतिरिक्तानामावर्तने ततः पूर्वं वा यदा संधिर्भवति तदा संधिदिने पूर्वचतुर्थांशे इष्टिर्भवति । तत्र विशेषमाह **गर्गः**—

"प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते । पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः"॥ इति । १० पर्वणश्चतुर्थोऽशप्रतिपदस्त्रयोंऽशाश्च यागकालत्वेन विहिताः । तत्र पर्वचतुर्थांशस्य विषय उदाहृतः । प्रतिपदंशानां तु विषय उदाह्रियते । उषःकाले सन्धौ प्रतिपदः प्रथमांशो यागकालः । निशीथे संधौ द्वितीयांशः । रात्रिप्रारंभे संधौ तृतीयांशः । नन्वनेन न्यायेनापराह्णे संधौ प्रतिपच्चतुर्थांशस्य यागकालत्वं प्राप्नोति । तच्च प्रतिषिद्धं 'न यष्टव्यं चतुर्थांशः' इति स्मृतेः । अतस्तादृशे विषये याग एव लुप्यते इति चेन्मैवम् । **वृद्धशातातपेन** प्रतिप्रसवाभिधानात्— १५

"संधिर्यद्यपराह्णे स्याद्यागं प्रातः परेऽहनि । कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दूष्यति"॥ इति ।

**कालादर्शेऽपि**—

"चतुर्थः पर्वणो योंऽशो येंऽशाः प्रतिपदस्त्रयः । आद्यास्तस्याश्चतुर्थोऽपि यागकाल उदाहृतः"॥ इति । तस्याः प्रतिपदः चतुर्थोऽप्यंशो यागकाल इत्यर्थः । एवं तर्हि चतुर्थांशे यागप्रतिषेधो निर्विषयः स्यादिति चेन्मैवम् । सद्यःकालविषये चरितार्थत्वात् । तं च विषयं दर्शयति **कात्यायनः**— २०

"संधिश्चेत्संगवादूर्ध्वं प्राक्चेदावर्तनाद्रवेः । सा पौर्णमासी विज्ञेया सद्यःकालविधौ तिथिः"॥ इति ।

**भाष्यार्थसंग्रहकारोऽपि**—

"अन्वाहितिश्चास्तरणोपवासः पूर्वेद्युरेते खलु पौर्णमास्याम् ।

"आवर्तनात्प्राग्यदि पर्वसंधिः सद्यस्तदा वा क्रियते समस्तम्"॥ इति । **कालादर्शेऽपि**—

"पूर्णिमा प्रतिपत्संधिः यदि संगवमंतरा । आवर्तनं च स्यात्तर्हि सद्यस्कालविधिर्भवेत्"॥ इति । २५ **आपस्तंबोऽपि**—"पौर्णमास्यां त्वन्वाधानपरिस्तरणोपवासः सद्यो वा सद्यःकालायां सर्वं क्रियते" इति। संगवावर्तनयोर्मध्ये पौर्णमासी प्रतिपदोः संधौ सति संधिदिनात्पूर्वेद्युर्वा अन्वाधानादिपरिस्तरणांतं संधिदिने वा अन्वाधानादिकं सर्वं क्रियत इत्यर्थः । एवं सति प्रतिपच्चतुर्थांशप्रतिषेधवचनमत्र विषये सावकाशम् । विकृतिरूपाया इष्टेस्तु कालमाह **कात्यायनः**—

"आवर्तनात्प्राग्यदि पर्वसंधिः कृत्वा तु तस्मिन्प्रकृतिं विकृत्याः । ३०

"तत्रैव यागः परतो यदि स्यात्तस्मिन्विकृत्या प्रकृतेः परेद्युः"॥ इति । आवर्तने ततः पुरा वा पर्वसंधौ तस्मिन्संधिदिने प्रथमं प्रकृतियागं कृत्वा पश्चाद्विकृतेः संबंधि यागः कर्तव्यः । यदि आवर्तनात्परतः संधिः तदा केवलविकृतियागः संधिदिने कर्तव्यः । प्रकृतियागस्तु केवलसंधिदिनात्परेद्युरनुष्ठेय इत्यर्थः । आवर्तने ततः पूर्वकाले ततः परकाले वा संधिरित्येतेषु त्रिष्वपि पक्षेषु संधिदिन एव विकृतेरनुष्ठानं प्रकृतेस्तु पूर्वोक्तरीत्या संधिदिने परेद्युश्चानुष्ठानं व्यवतिष्ठते । ३५

तदेवं संपूर्णतिथौ इष्टिपशुसोमविकृतीनां केवलपर्वैव कालः । खंडतिथौ तु पूर्वोक्तः कालः । **तदेतदापस्तंब** आह " यदीष्ट्या यदि पशुना यदि सोमेन यजेतामावास्यायां पौर्णमास्यां वा यजेत "॥ इति । पर्वप्रतिपदोः संधिमुपजीव्यान्वाधानेष्टिकालौ व्यवस्थापितौ । अत्र तिथिक्षय-वृध्द्योः सन्धिविषयं कंचिद्विशेषमाह **कात्यायनः**—

५ "परेऽन्हि घटिका न्यूनास्तथैवाभ्यधिकास्तु याः। तदर्धकॢप्त्या पूर्वस्मिन् ह्रासवृध्द्या प्रकल्पयेत्"॥ इति। **लोकाक्षिरपि**—" तिथेः परस्या घटिकास्तु या स्युर्न्यूनास्तथा वाऽभ्यधिकास्तु तासाम् । "अर्धं वियोज्यं च तथा प्रयोज्यं ह्रासे च वृद्धौ प्रथमे दिने स्यात्" ॥ इति ।

**कालादर्शेऽपि**—

"पर्वणि क्षयगे वृद्धौ परस्यान्हः क्षयोर्जिती । अर्धकॢप्त्या यथान्यायं दिने पूर्वत्र योजयेत्"॥ इति ।

१० पर्वणि पूर्णिमायाममायां च क्षयगे क्षयगामिनि सति वृद्धौ वृद्धिगामिनि सति परस्याह्नः प्रतिपदः क्षयोर्जिती ह्रासवृद्धी अर्धकॢप्त्या अर्धकल्पनेन यथान्यायं यथासंख्यक्रमेण पूर्वत्रदिने योजये-दित्यर्थः । पूर्वेद्युः पूर्णिमा अमावास्या वा पंचदशघटिका परेद्युः प्रतिपदपि तावती तदा यथास्ति तामेवोपजीव्य सन्धिर्विज्ञेयः । यदा तु प्रतिपदि षड्घटिकाः क्षीयन्ते तदा घटिकात्रयक्षयः पर्वणि योजनीयः । तस्मिन् योजने द्वादशघटिकामावस्या भवति । अनेन न्यायेन षड्घटिकावृद्धौ

१५ घटिकात्रये योजिते अष्टादशघटिका अमावास्या भवति । तथा सत्यावर्तनादूर्ध्वं संधिर्भवति । तदेवं संधिं विज्ञाय तदनुसारेणान्वाधानेष्टी अनुष्ठातव्ये ।

**बोधायनमतानुसारिणाममावास्यायां विशेषः** । **बोधायनकात्यायनमतानुसारिणा-ममावास्यायां** विशेषमाह **कात्यायनः**—

" सिनीवाल्यपराह्णे चेद्दृगापस्तंबसामिनाम् । सायाह्णे द्वित्रिनाडी चेत्सा बोधायनकण्वयोः" ॥ इति ।

२० श्राद्धेऽप्येवमेव तिथिर्ग्राह्या । यतः **स** एवमाह—

" चतुर्दशीदिनांते तु चतुस्त्रिघटिका यदि । अमाभूते च कर्तव्यं श्राद्धं वाजसनेयिभिः "॥ इति ।

**कालनिर्णये**-"अस्तमयादर्वाक् स्वल्पामावास्योपेतायामपि चतुर्दश्यां श्राद्धान्वाधाने कर्तव्ये" इति । एतच्च तिथिसाम्ये द्रष्टव्यम् । तिथिक्षये तु अस्तमयात्परं चतुर्दश्यनुवृत्तावपि तस्मिन्नेव दिने श्राद्धान्वाधाने । तथा च **बोधायनः**—

२५ "चतुर्दशी तु संपूर्णा द्वितीया क्षयकारिणी । चरुरिष्टिरमायां स्याद्भूते कव्यादिका क्रिया" ॥ इति । अस्यार्थः—चतुर्दशी संपूर्णा अस्तमयपर्यंतवर्तिनी अधिका वा द्वितीया क्षयकारिणी प्रतिपद्दिने सायाह्नवर्तिनी अत्रामायां चरुः स्थालीपाक इष्टिश्च स्याद्भूते चतुर्दश्यां कव्यादिका श्राद्धान्वाधाने इत्यर्थः । **स** एव—

" चतुर्दशीचतुर्यामे त्वमावास्या न दृश्यते । श्वोभूते प्रतिपद्यत्र भूते कव्यादिका क्रिया "॥ इति ।

३० अस्यार्थः—चतुर्दशीदिनचतुर्थयामे अमावास्या न दृश्यते श्वोभूते अमावास्यायामस्तमयात्प्रागेव प्रतिपद् दृश्यते । तदा भूते चतुर्दश्यां कव्यादिका क्रियेत्यर्थः । **स्मृत्यंतरेऽपि**—

" अमायां तु दिवा युक्ता प्रतिपद्घटिकाऽपि वा । तत्रैवेष्टिसमाप्तिः स्यात्तिथिवृद्धिर्भवेन्न चेत्"॥ इति।

" द्वितीयास्तमये काले घटिकैकाऽपि दृश्यते । अत्र यागं न कुर्वीत विश्वेदेवाः पराङ्मुखाः ॥

"द्वितीया तु दिवा युक्ता नाड्येका प्रतिपत्तिथौ । अमावास्या चतुर्थेंऽशे यागस्तत्र समाप्यते"॥ इति ।
पूर्वेद्युरन्वाधानं अमावास्यायां यागसमाप्तिरित्यर्थः । **बोधायनः**—
" यदा चतुर्दशीयामं तुरीयमनुपूरयेत् । अमावास्या क्षीयमाणा तदैव श्राद्धमाचरेत् " ॥ इति ।
**अस्यार्थः**—चतुर्दश्यास्तुरीयं यामं यदामावास्या अनुपूरयेत् स्पृशेत् सा च पुनः क्षीयमाणा परेद्युः चतुर्थयामे प्रतिपद्युक्ता तदैव अमावास्यास्पृष्टचतुर्दशीदिन एव श्राद्धान्वाधाने कुर्यादित्यर्थः । ५
**बोधायनवृद्धशातातपौ**—
"द्वितीया त्रिमुहूर्ता चेत्प्रतिपद्याऽपराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात्" ॥ इति ।
प्रतिपद्दिने सोमदर्शनादमायामिष्टिरित्यर्थः । **कालादर्शेऽपि**—
" द्वितीया त्रिमुहूर्ता चेत् प्रतिपद्यापराह्णिकी । भूतेन्वाहितिरिष्टिस्तु श्वश्चन्द्रस्य दर्शनात् " ॥ इति ।
प्रतिपद्यस्तमयात्पूर्वं द्वितीया त्रिमुहूर्ता चेत्तदा भूते चतुर्दश्यामन्वाधानं इष्टिस्तु श्वः चतुर्दश्याः १० परेद्युर्भवेत् । तस्माच्छ्वश्चंद्रस्य दर्शनात् चतुर्दश्युत्तरदिने चंद्रस्य दर्शनात् तत्रेष्टिर्न कर्तव्येत्यर्थः ।
त्रिमुहूर्तेति घटिकामात्रस्याप्युपलक्षणम्—
"अर्वागस्तमयाद्यत्र द्वितीया घटिका भवेत् । तत्र यागं न कुर्वीत तदा चंद्रस्य दर्शनात्"॥ इति **स्मृतेः**।
चंद्रदर्शनराहित्यमेवाभिप्रेत्य **बोधायनकारिकासु** पठ्यते—
" इष्टेरलं प्रतिपदोऽन्हि तदैव नाड्यः सप्ताष्ट वा यत्र भवंति तस्मात् । १५
" क्षीणासु नाडीषु दिनस्य पूर्वः कल्पोऽथ वृद्धौ तु भवेत् द्वितीया " ॥ इति । अयमर्थः—अमावास्यातिथेः संबंधिनीषु नाडीषु क्षीणासु सतिषु तस्मिन्दिने अस्तमयात्पूर्वं प्रतिपदः संबंधिन्यो नाड्यः सप्ताष्ट वा यदि भवंति तदा तद्दिनमिष्टेरलं योग्यम् । सोऽयमेकः पक्षः । अमावास्याप्रतिपदौ यदा वर्धेते अस्तमयात्परं प्रतिपदमनुवर्तते तदा द्वितीयः कल्पो भवेत् । अमावास्यायामन्वाधाय सोमदर्शनरहिते प्रतिपद्दिने यागः कर्त्तव्य इति । एवं च तिथिवृद्धिप्रक्रमे चतुर्दश्यामस्तमयात्पूर्वममावास्यायोगे अमावास्यायां चास्तमयात्पूर्वं प्रतिपद्योगे च प्रतिपद्दिने अस्तमयात्परं प्रतिपदनुवृत्तौ तिथिवृद्धिर्भवेन्न चेदिति पूर्वोक्तवचनात् प्रतिपद्युतामावास्यायामन्वाधानं प्रतिपदि यागः कर्तव्यः । तिथिसाम्ये तिथिक्षये च चतुर्दश्यामन्वाधानं पर्वणि यागः । **स्मृत्यंतरेऽपि**— २०

" आदित्येऽस्तमिते चंद्रः प्रतीच्यामुदियाद्यदा । प्रतिपद्यतिपत्तिः स्यात्पंचदश्यां यजेत्तदा ॥
" अमावास्याऽस्य पूर्वेद्युः अदृष्टेंदुः प्रशस्यते । दृष्टचंद्रेन कर्तव्यो यागस्तत्र परेऽहनि ॥ २५
" दृष्टचंद्रदिने चेत्स्याद्देवा यांति पराङ्मुखाः " ॥ इति । प्रतिपद्दिने अस्तमयात्पूर्वं घटिकामात्रद्वितीयासंभवे चंद्रस्य दर्शनात् तत्र यागो न कर्तव्य इत्यर्थः ।

**कात्यायनोऽपि**—" अन्वाधानं भूततिथ्यां तु कुर्यात्सायादौ चेत्संप्रविष्टा द्वितीया ।
" तस्यां तिथ्यां दर्शनात्प्रत्यगिंदोः पर्वण्युक्तो यागकालो नितांतः " ॥ इति ।

**वृद्धवसिष्ठः**— ३०
" इंदौ निरुप्ते हविषि पुरस्तादुदिते विधेः । यद्वैगुण्यं हुते तस्मिन्पश्चादपि हि तद्भवेत् " ॥ इति ।
अयमर्थः—संपूर्णचतुर्दश्यामविचारेणामावास्याबुद्धिं कृत्वा हविर्निर्वापे कृते तस्मिन्दिने उषःकाले पूर्वस्यां दिशि चंद्रमा उदेति तदा दर्शकालस्याप्राप्तत्वात्कालापराधं निमित्तीकृत्य दर्शदेवता अपनीय दात्रादिगुणविशिष्टान्यग्न्यादिदेवतांतराण्युद्दिश्य यागो विहितस्तैत्तिरीयब्राह्मणे-

" यस्य हविर्निरुप्तं पुरस्ताच्चंद्रमा अभ्युदेति त्रेधा तंडुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् " इत्यादिना ( तै. सं. २।५।५ )। सोऽयं दृष्टांतः। हविषि निरुप्ते सति तत ऊर्ध्वं पूर्वस्यां दिशि चंद्रमस्यभ्युदिते यद्वैगुण्यं तदेव वैगुण्यं होमदिने पश्चिमदिशि चंद्रोदये भवतीति । एतदेव बोधायनमतमुपोद्बलयति श्रुतिः—"यस्मिन्नहनि पुरस्तात्पश्चात्सोमो न दृश्यते ५ तदहर्यजेत " इति। चंद्रदर्शनोपतायां शुक्लप्रतिपदि यागानुष्ठाने प्रायश्चित्तमाह कात्यायनः—

"यजनीयेऽन्हि सोमश्चेत् वारुण्यां दिशि दृश्यते। तत्र व्याहृतिभिर्हुत्वा दंडं दद्यात् द्विजातयः"॥ इति।

यत्तु बोधायनवचनम्—

" मध्याह्नात्परतो यत्र चतुर्दश्यनुवर्तते । सिनीवाली तु सा ज्ञेया पितृकार्ये तु निष्फला "॥ इति तद्बोधायनीयव्यतिरिक्तविषयम् । अन्यथा पूर्वोक्तवचननिचयविरोधः स्यात् । पौर्णमासे १० बोधायनमतावलंबिनां विशेषादर्शनात् वाजसनेयिनामेव विशेषदर्शनात् वाजसनेयिव्यतिरिक्तानां सर्वेषां पूर्वोक्त एव प्रकारोऽवगंतव्यः । इति इष्टिनिर्णयः—

नक्षत्रादिनिर्णयः । अथ नक्षत्रादिनिर्णयः । तत्र मार्कंडेयः—

" तन्नक्षत्रमहोरात्रं यस्मिन्नस्तमितो रविः। यस्मिन्नुदेति सविता तन्नक्षत्रं दिनं भवेत् "॥ इति। अयमर्थः—द्विविधो नक्षत्रसंबंधिकालविशेषः। अहोरात्रौ दिनं च । अनुष्ठेयं कर्मापि द्विविधम् । १५ अहोरात्रसाध्यं दिनसाध्यं च । उपवासैकभक्तादिकमहोरात्रसाध्यम् । यद्यप्यल्पकालनिष्पाद्यं भोजनमेकभक्तनक्तयोः स्वरूपं तथाप्यहोरात्रे भोजनांतरस्य एकभुक्तादिनिषाततया भोजनांतरपरित्यागसहितस्यैव भोजनस्यैकभक्तादिस्वरूपत्वादहोरात्रसाध्यत्वं विरुद्धम् । दानव्रतश्राद्धानामहन्येव कर्तव्यतया दानादिकं दिनसाध्यम् । तत्रोपवासादौ निशीथव्यापि अस्तमयव्यापि वा नक्षत्रं ग्राह्यम् । व्रतदानादौ तु सूर्योदयव्यापि नक्षत्रं ग्राह्यमिति । तदुक्तं स्कान्दपुराणे—

२० " तत्रैवोपवसेदृक्षे यन्निशीथे यदा भवेत् । उपोषितव्यं नक्षत्रं यस्मिन्वास्तमियाद्रविः ॥

" उपवासे यदृक्षं स्यात् तद्धि नक्तैकभुक्तयोः "॥ इति । अस्तमययोगो मुख्यः । निशीथयोगोऽनुकल्पः । विष्णुधर्मोत्तरे—

" सा तिथिस्तच्च नक्षत्रं यस्मिन्नभ्युदितो रविः। तथा कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्"॥ इति। एतदुपवासव्यतिरिक्तव्रतादिविषयम्। यद्यप्यत्र सूर्योदयकाले नक्षत्रसद्भावमात्रं प्रतीयते न तु परिमाण- २५ विशेषः तथापि त्रिमुहूर्तपरिमाणस्य तिथिषु क्लृप्तत्वात् तन्न्यायेनोदये ' त्रिमुहूर्तस्थं नक्षत्रं व्रतदानयोः' इति वचनेन चोदयादित्रिमुहूर्तव्यापि नक्षत्रं ग्राह्यम् । नक्षत्रश्राद्धे तु अपराह्णस्य पार्वणश्राद्धकालत्वेन तद्व्यापिराश्रयणीया । एवं विष्कम्भादियोग उपवासादौ अस्तमयव्यापी ग्राह्यः । दानव्रतयोरुदयादित्रिमुहूर्तव्यापी ग्राह्यः । श्राद्धे तु कर्मकालव्यापी ग्राह्यः । एवं बवादिकरणानां तिथ्यर्धपरिमितत्वेन दिनद्वयव्यापित्वसंदेहाभावादुदयेऽस्तमये वा यस्मिन्दिने करणसद्भावस्तास्मि- ३० न्नेव दिने तत् कर्मानुष्ठेयम् । संक्रांतिग्रहणादिकालो नैमित्तिकस्नानादिप्रकरणे निरूपितः[1] ॥

**इति वैद्यनाथदीक्षितविरचिते स्मृतिमुक्ताफले कालनिरूपणं नाम पंचमः परिच्छेदः**

**तिथिनिर्णयकाण्डः समाप्तः ॥ हरिः ओम् ।**

( श्रीयवतेश्वरार्पणमस्तु । शके १७६७ विश्वावसुनामाब्दे भाद्रपदकृष्णदशम्यां भृगुवासरे तद्दिने इदं पुस्तकं यवतेश्वरस्थशङ्करनारायणद्राविडेन लिखितम् । स्वार्थपरार्थं च । यद्क्षरप )

---

१ २६४–२७६ पृ.

# प्रायश्चित्तकाण्डः षष्ठः ।

॥ शुभमस्तु ॥

श्रीरामचरणाम्भोजलीनमानसषट्पदः । वैद्यनाथाध्वरी प्रायश्चित्तं संगृह्य भाषते ॥

अथ प्रायश्चित्तकाण्डमारभते । प्रायो नाम तपः चित्तं निश्चयः । अनुष्ठितेन द्वादश-वार्षिकादिना अवश्यं पापं निवर्तत इति विश्वासयुक्तव्रतानुष्ठानलक्षणं तपः प्रायश्चित्तम् । ५
तदाहाङ्गिराः—

"प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तं प्रायश्चित्तमिहोच्यते" ॥ इति ।
तच्च विहिताकरणादिनिमित्तवन्तं प्रति चोदनानैमित्तिकम् । तथा च बृहस्पतिः—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । प्रायश्चित्तं यत्क्रियते तन्नैमित्तिकमुच्यते" ॥ इति ।
विज्ञानेश्वरः (पृ. २३५ पं. २४)—"प्रायश्चित्तशब्दः पापक्षयार्थे नैमित्तिके कर्मविशेषे रूढः" इति । १०
तदेवं प्रायश्चित्तशब्दः योगेन रूढ्या च पापनिवर्तनक्षमं धर्मविशेषमाचष्टे ।

**प्रायश्चित्ताधिकारिनिरूपणम्** । तत्र अधिकारिणं दर्शयति मनुः (११।४४)—

"अकुर्वन्विहितं कर्म निन्दितं च समाचरन् । प्रसज्जंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः" ॥ इति ।
याज्ञवल्क्योऽपि (प्रा. २१९–२२०)—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" ॥ १५
प्रत्यवायीभवति ।

"तस्मात्तेनेह कर्तव्यं प्रायश्चित्तं विशुद्धये । एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति" ॥
एवं प्रायश्चित्ते कृते अस्यान्तरात्मा शुद्धतया प्रसीदति लोकश्च संव्यवहर्तुं प्रसीदतीत्यर्थः ।

**एकविंशति नरकाः** । प्रायश्चित्ताकरणे दोषमाह स एव (प्रा. २२१–२२५)—

"प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः । अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान् ॥ २०
"तामिस्रं लोहशङ्कुं[1] च महानिरयशल्मली । रौरवं कुड्मलं[3] पूतिं[4] मृत्तिकां कालसूत्रकम् ॥
"संघातं लोहितोदं च सविषं संप्रतापनम् । महानरककाकोलं[5] सञ्जीवनमहापथम्[6] ॥
"अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च । असिपत्रवनं चैव तपनं[7] चैकविंशकम्" ॥
"महापातकजैर्घोरैरुपपातकजैस्तथा । अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः" ॥ इति ।
एकविंशकमित्येतत् प्रधाननरकापेक्षयोक्तम् । महापातकजैरिति उपपापमात्रोपलक्षणम् । २५
तथा च पापतारतम्यात् फलतारतम्यं दर्शितं विष्णुधर्मोत्तरे—

"अष्टाविंशतिकोट्यः स्युर्घोराणि नरकाणि वै । महापातकिनश्चात्र सर्वे स्युर्नरकाब्धिषु ॥
"आ चन्द्रतारकं यावत्पीड्यन्ते विविधैर्वधैः । अतिपातकिनश्चान्ये निरयार्णवकोटिषु ॥
"एकविंशतिसंख्येषु पादोनब्रह्मकल्पकम् । चतुर्दशसु पच्यन्ते कल्पार्धं समपापिनः ॥
"उपपातकिनश्चापि तदर्धं यान्ति मानवाः । शेषैः पापैस्तदर्धं च कालक्लृप्तिरियं स्मृता[8]" ॥ इति । ३०

---

१ ग–म्य । २ ग–सक्त । ३ क–कश्मल । ४ ग–पूतिमृत्तिकं । ५ क्ष–लोकं च । ६ क्ष–वशि ।
७ तापनमिति मुद्रिते पाठः । ८ ग–पाप ।

**रहस्यकृतपापफलानिरूपणम्**। रहस्यकृतपापफलमाह **पराशरः**—

"पातके तु सहस्रं स्यान्महति द्विगुणं तथा। उपपातके तुरीयं स्यान्नरकं वर्षसंख्यया"॥ इति।

**नरकानुभवानन्तरं तिर्यगादिजन्मनिरूपणम्**। एवं नरकमनुभूय कर्मशेषात्पुनरिह संसारे दुःखबहुलतिर्यगादिषु योनिषु जायन्ते। तदाह **याज्ञवल्क्यः** (प्रा. २०६–२०८)—

५ "महापातकजान् घोरान्नरकान्प्राप्य दारुणान्। कर्मक्षयात्प्रजायन्ते महापातकिनस्त्विह॥

"मृगाश्वसूकरोष्ट्राणां ब्रह्महा योनिमृच्छति। खरपुल्कसवेणानां सुरापो ब्राह्मणो व्रजेत्॥

"कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात्। तृणगुल्मलतात्वं च क्रमशो गुरुतल्पगः"॥

एतच्चाकामकारविषयम्। कामकारे तु अन्यास्वपि दुःखबहुलयोनिषु संसरति।

यथाह **मनुः** (१२।२४–२८)—

१० "बहुवर्षगणान् सर्वान्नरकान्प्राप्य तत्क्षणात्। संसारान्प्रतिपद्यन्ते महापातकिनस्त्विह॥

"श्वसूकरखरोष्ट्राणां गोमायुमृगपक्षिणाम्। चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति॥

"कृमिकीटपतङ्गानां विड्भुजां चैव पक्षिणाम्। हिंस्राणां चैव सत्त्वानां सुरापो ब्राह्मणोऽसकृत्॥

"लूताहिसरटानां च तिरश्चां चांबुचारिणाम्। हिंस्राणां च पिशाचानां स्तेनो विप्रः सहस्रशः॥

"तृणगुल्मलतानां च क्रव्यादां दंष्ट्रिणामपि। क्रूरकर्मकृतां चैव शतशो गुरुतल्पगः"॥ इति।

१५ लूता ऊर्णनाभिः[४]। सरटः कृकलासः। एवं रौरवादिनरकेषु श्वसूकरादियोनिषु च दारुणं दुःखमनुभूयानन्तरं दुरितशेषेण जननमरणसमय एव क्षयरोगादिलक्षणयुक्तो दुःखप्रचुरेषु मानुषशरीरेषु संसरति। तथा च **याज्ञवल्क्यः** (प्रा. २०९–२१०)—

"ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः। हेमहारी तु कुनखी दुश्चर्मा गुरुतल्पगः॥

"यो येन संवसत्येषां स तल्लिङ्गो हि जायते"॥ इति। श्यावदन्तकः स्वभावतः कृष्ण-

२० दशनः। दुश्चर्मा कुष्ठी। एतेषां ब्रह्महादीनां मध्ये येन पुरुषेण यः संवसति स तल्लिङ्गो जायते इत्यर्थः। एवं महापातकव्यतिरिक्तेष्वन्येष्वपि पापेषु अकृतप्रायश्चित्तानां नरकानुभवानन्तरं तिर्यगादिषु जननम्। **स** एवाह (प्रा. २१७)—

"यथाकर्मफलं प्राप्य तिर्यक्त्वं कालपर्ययात्। जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः"॥ इति।

तथान्यत्र—

२५ "चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये। निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः"॥ इति।

**मनुरपि** (११।४८)—

"इह दुश्चरितैः केचित् केचित्पूर्वकृतैस्तथा। प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम्"॥ इति।

इह दुश्चरितैरस्मिन् जन्मन्यार्जितैः उत्कटैः पापैरिह तत्फलं पूर्वमनुभूय पश्चान्नरकादिकमनुभवन्ति।

"अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते। त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः"॥ इति **स्मृतेः**।

३० पूर्वकृतैस्तु पापैर्नरकाद्यनुभवानन्तरं रूपविपर्ययं प्राप्नुवन्तीत्यर्थः। **स** एव (१२।६०–६८)—

"संयोगं पतितैर्गत्वा परस्यैव च योषितम्। ब्रह्मस्वमपहृत्यापि भवन्ति ब्रह्मराक्षसाः॥

"पिशुनः पूतिनासत्वं सूचकः पूतिवक्त्रताम्। धान्यचोरोऽङ्गहीनत्वमातिरेक्यं तु मिश्रतः[६]॥

"अन्नहर्तामयावित्वं मत्स्यं वागपहारकः। वस्त्रापहारकः श्वैत्र्यं पङ्गुतामश्वहारकः॥

"एवं कर्मविशेषेण जायन्ते सद्विगर्हिताः। जडमूकान्धबधिरा विकृताकृतयस्तथा॥

३५ "मणिमुक्ताप्रवालानि हृत्वा लोभेन मानवाः। विविधानि च रत्नानि जायन्ते लोहकर्तृषु॥

---

१ क्ष–त्त्यियं। २ क्ष–कृमि। ३ ग–क्रमशो; क्ष–चमरो। ४ ग–भः। ५ ग–पतितेन। ६ अ. ११।५०–५२; ६१–६८;। ७ क–त्र्यं; क्ष–वयं। ८ ग–पङ्गु।

"धान्यं हृत्वा भवत्याखुः कांस्यं हंसो जलं प्लवः। मधुदंशः पयः काको रसं श्वा नकुलो घृतम्॥
"मांसं गृध्रो वसां मद्गुस्तैलं तैलपकः खगः। चिरीवाकस्तु लवणं बलाकः शकुनिर्दधि॥
"कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः। कार्पासं तान्तवं क्रौञ्चो गोधा गां वाग्गदो गुडम्॥
"चुचुन्दरिः शुभान् गन्धान् पत्रशाकं तु बर्हिणः। श्वावित् कृतान्नं विविधमकृतान्नं तु शल्यकः॥
"बको भवति हृत्वाग्निं गृहकारी ह्युपस्करम्। रक्तानि हृत्वा वासांसि जायते जीवजीवकः॥ ५
"वृको मृगेभं व्याघ्रोऽश्वं फलपुष्पं तु मर्कटः। स्त्रीमृक्षः स्तोकको वारि यानान्युष्ट्रः पशूनजः॥
"यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः। अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः"॥
"यादृशेन हि भावेन यद्यत्कर्म निषेवते। तादृशेन शरीरेण तत्तत्फलमुपाश्नुते" (१२।८१)॥ इति।
**याज्ञवल्क्योऽपि** (प्रा. २१०-२१५)—"अन्नहर्ताऽमयावी स्यान्मूको वागपहारकः।
"धान्यहर्ताऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः। तैलहृत्तैलपायी स्यात् पूतिवक्त्रस्तु सूचकः॥ (२१०) १०
"हीनजातौ प्रजायेत रत्नानामपहारकः॥ (२१३)
"श्वित्री वस्त्रं श्वा रसं तु चीरी लवणहारकः। आमयावी अजीर्णान्नो मौक्यं वागपहारकः"॥
पुस्तकहारी अननुज्ञाताध्यायी च। तैलपायी कीटविशेषः। सूचकः सद्दोषसंकीर्तकः।
"पत्रशाकं शिखी हृत्वा गन्धान् चुचुन्दरी शुभान्।
"मूषको धान्यहारी स्याद्यानमुष्ट्रः फलं कपिः। जलं प्लवः पयः काको गृहकारी ह्युपस्करम्॥ (२१४) १५
"मधु दंशः फलं गृध्रो गां गोधाग्निं बकस्तथा"। चुचुन्दरिः राजदुरिताख्यो मूषकविशेषः। गृहकारि कीटविशेषः। उपस्करः मुसलादि। चीरी उच्चैस्वरः कीटविशेषः। शङ्खो विशेषमाह—
"ब्रह्महा कुष्ठी तैजसहारी मण्डली देवब्राह्मणाक्रोशकः खलतिर्गरदाग्निदावुन्मत्तौ गुरुप्रतिहन्तापस्मारी गोघ्नश्चान्धः धर्मपत्नीमृतौ त्यक्त्वाऽन्यत्र प्रवृत्तः शब्दवेधी प्राणिविशेषः। कुण्डाशी दंशभक्षः। देवब्राह्मणस्वापहारी पाण्डुरोगी। न्यासापहारी काणः। स्त्रीवर्ंयोपजीवः षण्ढः २० कौमारदारत्यागी दुर्भगो मृष्टैकाशी वातगुल्मी अभक्ष्यभक्षको गण्डमाली ब्राह्मणीगामी निर्बीजः क्रूरकर्मा वामनः वस्त्रापहारी पतङ्गः शय्यापहारी क्षपणकः शङ्खशुक्त्यहारी कपाली दीपापहारी कौशिकः मित्रध्रुक् क्षयी मातापित्रोराक्रोशकः कारण्डकः" इति।

**वृद्धगौतमोऽपि** क्वचित् विशेषमाह—"अनृतवाक् खलः मुहुर्मुहुः संचलनवाक् जलोदरो दारत्यागी श्लीपदी कूटसाक्षी उच्छ्रितजंघाचरणः। विवाहविघ्नकर्ता छिन्नोष्ठः गोररक्षणे च्छिन्न- २५ हस्तः मातृघ्नोऽन्धः। स्नुषागामी वातवृषणः। चतुष्पथे विण्मूत्रविसर्जनो मूत्रकृच्छ्री। कन्यादूषकः षण्डः। ईर्ष्यालुः मशकः। पित्रा विवदमानोऽपस्मारी। न्यासापहारी अनपत्यः। रत्नापहारी अत्यन्तदरिद्रः। विद्याविक्रयी पुरुषमृगः। वेदविक्रयी द्वीपी। बहुवंचको जलप्लवः। अयाज्ययाजको वराहः। अनिमन्त्रितभोजी वायसः। मृष्टैकभोजी वानरः। यतस्ततोऽन्नमश्नन्मार्जारः। कक्षवनदाहकः खद्योतः। दारकाचार्यो मुखविट्गन्धः। पर्युषितभोजी कृमिः। अदत्तादायी बलीवर्दः। ३० मत्सरी भ्रमरः। अग्न्युत्सादी मण्डलकुक्षी। शूद्राचार्यः श्वपाकः। गोहती सर्पः। स्नेहापहारी क्षयी। अन्नापहारी अजीर्णी। ज्ञानापहारी मूकः। चण्डालीपुल्कसीगमकः रजकः। प्रव्रजितागमने मरुपिशाचः शूद्रागमने दीर्घघंटः। सवर्णागमने दरिद्रः। जलहारी मत्स्यः। पञ्चमहापातकानि मिथ्यः। क्षारहारी

---

१ ग—काश; 'चीरी' मु. पाठः। २ 'छुछु'। ३ क्ष—त्ना। ४ 'मूलं' क्ष—मु। ५ क्ष—धा; ग—धाम्या। ६ 'मिश्रो' मु. पाठः। ७ क्ष—रिरुप। ८ क्ष—नि। ९ ग—वाक्यो। १० ग—गोरखगूर। ११ ग—द्वि। १२ ग—याज। १३ क्ष—य। १४ ग—ष्टी। १५ ग—गामी। १६ ग—दीर्घकीटः।

बलाकः । वार्धुषिकोऽङ्गहीनः । अविक्रेयविक्रयी गृध्रः । राजमहिषीगामी नपुंसकः । दुराक्रोशी गर्दभः । गोगामी मण्डूकः । अनध्यायाध्यायी सृगालः । परद्रव्यापहारी परप्रेष्यः । मत्स्यवेधो गर्दभः" इति ।
स्त्रियोऽप्येतेषु पूर्वोक्तास्वेव जातिषु स्त्रीत्वमनुभवन्ति । यथाह मनुः ( १२।६९ )—
" स्त्रियोप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः । एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः" ॥ इति ।
५ स एव ( १२।७८–८१ )—
" असकृत् गर्भवासेषु वसन् जन्म च दारुणम् । बन्धनानि च कष्टानि परप्रेष्यत्वमेव च "॥ इति ।
" बन्धुप्रियवियोगं च संसर्गं चाप्रियैर्जनैः । द्रव्यं जनं च नाशं च मित्रामित्रस्य चार्जनः ॥
" जरां चैवाप्रतीकारां व्याधिभिश्चोपपीडनम् । क्लेशांश्च विविधांस्तांस्तान्मृत्युमेव च दुर्जयम् ॥
" यादृशेन हि भावेन यद्यत्कर्म निषेवते । तादृशेन शरीरेण तत्तत्फलमुपाश्नुते " ॥ इति ।
१० दुर्लक्षणमनुष्यजन्मानन्तरं प्राक्भवीयसुकृतविशेषेण महाकुले भोगविद्याधनधान्यसंपन्नो जायते । तदाह याज्ञवल्क्यः ( प्रा. २१८ )—
" ततो निष्कल्मषीभूताः कुले महति भोगिनः । जायन्ते विद्ययोपेता धनधान्यसमन्विताः " ॥ इति ।
निष्कल्मषीभूताः नरकाद्युपभोगद्वारेण क्षीणपापा इत्यर्थः ।

**नवविधपापानि** । प्रायश्चित्तनिमित्तानि तानि पापानि नवविधानि । महापातकान्यति-
१५ पातकानि समपातकान्युपपातकानि सङ्करीकरणानिम लिनीकरणान्यपात्रीकरणानि जातिभ्रंशकराणि प्रकीर्णकानीति । यथाह विष्णुः ( ३३।१-५ ) " पुरुषस्य कामक्रोधलोभाख्यं रिपुत्रयं सुघोरं भवति तेनायमाक्रान्तो महापातकातिपातकसमपातकोपपातकेषु प्रवर्तते सङ्कीर्णकरणेषु मलापहेषु अपात्रीकरणेषु जातिभ्रंशकरणेषु प्रकीर्णकेषु च " इति ।

**ब्रह्महत्यादिमहापातकानि** । तत्र महापातकान्याह मनुः ( ११।५४ )—
२० " ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संयोगश्चैव तैः सह " ॥ इति । याज्ञवल्क्योऽपि ( प्रा. २२७ )—
" ब्रह्महा मद्यपः स्तेनः तथैव गुरुतल्पगः । एते महापातकिनो यश्च तैः सह संवसेत् " ॥ इति ।
यद्व्यापारसमनन्तरं वा कालान्तरे वा कारणान्तरनिरपेक्षः प्राणवियोगो भवति स ब्राह्मणं हतवानिति ब्रह्महा । मद्यपः निषिद्धसुरायाः पाता । स्तेनो ब्राह्मणस्वर्णहारी । गुरुतल्पगो गुरुभार्यागामी । यश्च
२५ तैर्ब्रह्महादिभिः प्रत्येकं संवत्सरं सह वसति सोऽपि महापातकीत्यर्थः ।

**प्रयोजकादीनां फलतारतम्यम्** । अनुग्राहकस्यापि हिंसाफलसंबन्धमाह मनुः—
" बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम् । यद्येको घातयेत्तत्र सर्वे ते घातकाः स्मृताः " ॥ इति ।
विष्णुः—
" आक्रुष्टस्ताडितो वापि धनैर्वा विप्रयोजितः । यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥
३० " ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव च । यमुद्दिश्य त्यजेत्प्राणान् तमाहुर्ब्रह्मघातकम् ॥
" रागद्वेषात्प्रमादाद्वा स्वतः परत एव वा । घातयेत् ब्राह्मणं कंचित्स भवेत् ब्रह्मघातकः ।
" भृतको यस्य तं हन्यात्सोऽपि च ब्रह्मघातकः " ॥ इति ।
हेमाद्रौ—"धनार्थं क्षेत्रदारार्थं पश्वर्थं वा जनेश्वर । यमुद्दिश्य त्यजेत्प्राणान् तमाहुर्ब्रह्मघातकम् ॥
"नारी वा पुरुषो वाऽथ विधवा वा मनस्विनी । यमुद्दिश्य त्यजेत्प्राणान् तमाहुर्ब्रह्मघातकम्" ॥ इति ।

---

१ ग–वासं । ग–मलिनीकरणेषु । ३ ग–संसर्गश्चापि । ४ ग–तु ।

**स्मृत्यन्तरेऽपि**—
"हन्ता मन्त्रोपदेष्टा च तथा संप्रतिपादकः । प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः ॥
"आश्रयः शस्त्रदाता च भक्तदाता च कर्मिणाम् । उपेक्षकः शक्तिमांस्तु दोषवक्ताऽनुमोदकः ॥
"अकार्यकारिणां तेषां प्रायश्चित्तं प्रकल्पयेत्" ॥ इति । **आपस्तम्बः** (२।११।२९।१–२)—
"प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनो यो भूय आरभते तस्मिन् फलविशेषः"॥इति। ५
प्रयोजकादीनां प्रत्यासत्तिव्यवधानापेक्षया व्यापारगतगुरुलाघवापेक्षया च फले गौरवलाघवात् प्रायश्चित्तेऽपि गौरवलाघवं बोध्यम् । तथा **सुमन्तुः**—
"तिरस्कृतो यदा विप्रो हत्वाऽऽत्मानं मृतो यदि । निर्गुणः सहसा क्रोधात् गृहक्षेत्रादिकारणात् ॥
"त्रैवार्षिकं व्रतं कुर्यात्प्रतिलोमां सरस्वतीम् । गच्छेद्वाऽपि विशुद्ध्यर्थं तत्पापस्येति निश्चितम् ॥
"क्रोधाद्वै म्रियते यस्तु निर्निमित्तं च भर्त्सितः । वत्सरत्रितयं कुर्यान्नरः कृच्छ्रं विशुद्धये ॥ १०
"भर्त्सको यः स विद्वांश्चेद्वर्षेणैकेन शुध्यति । केशश्मश्रुनखादीनामकृत्वा वपनं वने" ॥ इति ।
उपकारार्थं प्रवृत्तौ दोषाभावः । परोपकारार्थं प्रवृत्तौ दोषाभावमाह **संवर्तः**—
"औषधं स्नेहमाहारं ददद्गोब्राह्मणादिषु । दीयमाने विपत्तिः स्यान्न स पापेन लिप्यते ॥
"दाहच्छेदसिराभेदप्रयत्नैरुपकुर्वताम् । प्राणसन्त्राणसिद्ध्यर्थं प्रायश्चित्तं न विद्यते" ॥ इति ।
एतच्च निपुणभिषग्विषयम् । इतरस्तु 'भिषङ्मिथ्याचारं दाप्य' इति दोषस्मरणात् । १५
यत्र मन्युनिमित्ताक्रोशादिकमकुर्वतोऽपि नाम गृहीत्वा उन्मादादिना आत्मानं व्यापादयति तत्रापि न दोषः
"अकारणात्तु यः कश्चित् द्विजः प्राणान्परित्यजेत् । तस्यैव तत्र दोषः स्यान्न तु यं परिकीर्तयेत्"[1] ॥ इति स्मरणात् । तथा यत्राक्रोशादिजनितमन्युरात्मानं खड्गादिना प्रहृत्य मरणादर्वागाक्रोशादिकर्त्रा धनादिना सन्तोषितो यदि जनसमक्षमुच्चैः श्रावयति नात्राक्रोशकस्यापराध इति तत्रापि वचनान्न २० दोषः । यथाह **विष्णुः**—
"उद्दिश्य कुपितो भूत्वा तोषितः श्रावयेत्पुनः । तस्मिन् मृते न दोषोऽस्ति तस्य चोच्छ्रावणे कृते"॥इति।

**अतिपातकानि** । अतिपातकान्याह **मनुः** (११।८७–८८)—
"हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत् । राजन्यवैश्यावीजानावात्रेयीमेव च स्त्रियम् ॥
"उक्त्वा चैवानृतं साक्ष्ये प्रतिरुद्ध्य गुरुं तथा । अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधम्" ॥ २५
ईजानौ यागदीक्षामध्यवर्तिनौ । आत्रेयी अत्रिगोत्रजानिक्षेपं ब्राह्मणसंबन्धिनम् । स्त्री आहिताग्निपत्नी पातिव्रत्यादिगुणयुक्ता वा । अविज्ञातगर्भहननादीनामतिपातकत्वम्
"अतिदिष्टं तु यत्पापमतिपातकमुच्यते । अतिदुष्टेषु सर्वत्र पादोनं तत् व्रतं चरेत्" ॥ इति वचनादवगम्यते । **यमः**—
"मातृष्वसा मातृसखी दुहिता च पितृष्वसा । मातुलानी स्वसा श्वश्रूर्गत्वा सद्यः पतेत् द्विजः" ॥ इति । ३०
**गौतमः** (२१।१-२)—"मातृपितृयोनिसंबन्धागस्तेननास्तिकनिंदितकर्माभ्यासिपतितात्यागयपतितत्यागिनः पतितापातकसंयोजकाश्च" इति । **बोधायनोऽपि** (२।१।४१)—"अथ पतनीयानि। समुद्रयानं ब्रह्मस्वन्यासापहरणं भूम्यनृतवदनं सर्वापण्यैर्व्यवहरणं शूद्रसेवनं शूद्राभिगमनं यश्च शूद्रायामभिप्रजायते तदपत्यं च भवति" इति । **आपस्तम्बोऽपि** (१।९।३४।२३)—
"धर्मार्थसंनिपातेऽर्थग्राहिण एतदेव" इति ३५

---

[1] क्ष-तन्नु संकीर्तयेत् ।

**याज्ञवल्क्यः** ( प्रा. २५२ )—" चरेद्व्रतं महत्त्वापि घातार्थं चेत्समाहितः।
" पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि। मातुः सपत्नीं भगिनीमाचार्यतनयां तथा।
" आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः"॥ इति ( प्रा. २३२–२३३ )।
**विष्णुः** ( ३४।१ )—" मातृगमनं दुहितृगमनं स्नुषागमनम् " इति अतिपातकानीति।
५ **नारदः** ( १२।७३–३५ )—
" माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा॥
" दुहिताचार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्राजिता साध्वी धात्री वर्णोत्तमा च या॥
" आसामन्यतमां गच्छन् गुरुतल्पग उच्यते। आश्रितां विदुषः पत्नीमाहिताग्नेश्च योगिनः॥
"एषां पत्नीं स्वंपुत्रीं च गत्वा तल्पव्रतं चरेत्। चण्डाल्यां गर्भमाधाय गुरुतल्पव्रतं चरेत्"॥ इति।
१० अत्र माता मातृसपत्नी। **भविष्यत्पुराणे**—
" अग्निहोत्रार्थकपिलां हत्वा ब्रह्महणो व्रतम्। दुस्थितं संस्थितं वापि शिवलिङ्गं न चालयेत्॥
" अन्यथा तु कृते लिङ्गे अतिपातकमाप्नुयात्। उत्तमानां चामराणामन्यथाकरणे सति॥
" विप्रस्यैव व्रतं कुर्यात् विप्रदेवौ समौ स्मृतौ।
"गर्भिण्युदक्या विज्ञाताः कन्यामातामनिच्छतीम्। गुरुतल्पं चरेत् गत्वा गामयोनिं सखीं स्त्रियम्"॥इति।
१५ **याज्ञवल्क्यः** ( प्रा. २९८ )—
" नीचाभिगमनं गर्भघातनं भर्तृनाशनम्। विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्"॥
**व्याघ्रपादः**—
" अतिदेशस्योपदेशान्न्यूनत्वात्तद्व्रतं न हि। अतिदिष्टेषु सर्वत्र पादोनं तद्व्रतं चरेत् "॥ इति।
एवं महापातकातिदेशादन्यान्यप्यतिपातकानि द्रष्टव्यानि।
२० **ब्रह्महत्यासमपातकानि**। ब्रह्महत्यासमपातकान्याह **मनुः** ( ११।५५ )—
" अनृतं च समुत्कर्षे राजगामि च पैशुनम्। गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया "॥
**याज्ञवल्क्यः** ( प्रा. २२८ )—
" गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः। ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् "॥ इति
गुरूणामाधिक्येनाधिक्षेपोऽनृताभिशंसनं "कौटसाक्ष्यं राजगामि च पैशुनं गुरोरनृताभिशंसनं पातक-
२५ समानि " इति **गौतमस्मरणात्** ( २१।१० )। एतच्च लोकाविदितदोषाभिशंसनविषयम्। "दोषं
बुद्ध्वा न पूर्वः परेभ्यः पतितस्य समाख्याने स्यात्" **इत्यापस्तम्बस्मरणात्** ( १।७।२१।२० )।
नास्तिक्याभिनिवेशेन वेदकुत्सनं सुहृन् मित्रं तस्याब्राह्मणस्यापि वधः। अधीतस्य वेदस्या-
सच्छास्त्रविनोदेनालस्यादिना वा नाशनं विस्मरणम्। **पराशरः**—
" भुञ्जानेषु तु विप्रेषु योऽग्रे पात्रं परित्यजेत्। स मूढः स च पापिष्ठः ब्रह्मघ्नः स खलूच्यते "॥ इति।
३० **विष्णुधर्मोत्तरे**—
" यस्तु विद्याभिमानेन नीचो जयति सद्द्विजम्। उदासीनं सभामध्ये ब्रह्महा स प्रकीर्तितः॥
" परदोषमविज्ञाय नृपकर्णे जपेत्तु यः। पापीयान् पिशुनः क्षुद्रः स चैवं ब्रह्महा स्मृतः।
" देवद्विजगतां भूमिं पूर्वभुक्तां हरेत यः। प्रणष्टामपि कालेन तमाहुर्ब्रह्मघातकम् "॥ इति।

---

१ ग–पितृ। २ ग–पौ। ३ कग–व्याघ्रः।

**विष्णुः** ( ३३।१ )—"यागस्थस्य क्षत्रियस्य वैश्यस्य रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्रजाया अविज्ञातगर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमम्" इति ।
यागस्थक्षत्रियादीनामतिपातकत्वेन परिगणितानां समपातकत्वाभिधानमकामकृताभिप्रायम् । कामकारे तु तेषामतिपातकत्वम् ।

**सुरापानसमपातकानि** । सुरापानसमान्याह **मनुः** ( ११।५६ ) ५
"ब्रह्मोज्झता वेदनिन्दा च कौटसाक्ष्यं सुहृद्वधः । गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट्"॥ इति ।
गर्हितं लशुनादि । अनाद्यममेध्यादि । **याज्ञवल्क्यः** ( प्रा. २२९ )—
" निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् । रजस्वलामुखास्वादसुरापानसमानि तु "॥ इति ।
निषिद्धं लशुनादिकं तस्य मतिपूर्वभक्षणम् । 'पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः' इति **स्मरणात्** । जैह्म्यं कौटिल्यम् । अन्याभिसंधानेनान्यवादीत्वमन्यकर्तृत्वं च । तच्च गुरुविषयमिति १० **विज्ञानेश्वरः** ( पृ. २४०, पं. २४–२५ ) । तथा समुत्कर्षनिमित्तं राजकुलादावचतुर्वेद एव चतुर्वेदोऽहमित्यनृतभाषणम् । **स्मृत्यन्तरे**—
" नालिकेरोदकं कांस्ये गोक्षीरं लवणान्वितम् । स्नानं रजकतीर्थे च ताम्रे गव्यं सुरासमम् "॥ इति ।
**अत्रिः**—
" तोयं पाणिनखाग्रेषु ब्राह्मणो न पिबेत् क्वचित् । सुरापानेन तत्तुल्यमित्येवं मनुरब्रवीत् " ॥ १५
**शातातपोऽपि**—
" उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः । सुरापानेन तत्तुल्यं मनुराह प्रजापतिः " ॥ इति ।

**स्वर्णस्तेयसमपातकानि** । स्वर्णस्तेयसमान्याह **मनुः** ( ११।५७ )—
" निक्षेपस्यापहरणं नराश्वरजतस्य च । भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम् " ॥ इति ।
**याज्ञवल्क्यः** ( प्रा. २३० )— २०
" अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा । निक्षेपस्य च सर्वं हि स्वर्णस्तेयसमं मतम् "॥ इति ।
**विष्णुः** ( ३३।२ )—" ब्राह्मणभूम्यपहरणं स्वर्णस्तेयसमम् " इति ।
**हेमाद्रौ**—" हृत्वा शतपलं ताम्रं स्वर्णस्तेयसमं विदुः " ॥ इति ।

**गुरुतल्पसमपातकानि** । गुरुतल्पसमान्याह **मनुः** ( ११।५८ )—
"रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च । सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः "॥ २५
स्वयोनिषु भगिनीषु । **याज्ञवल्क्यः** ( प्रा. २३१ )—
" सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च । सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम् " ॥ इति ।
**पुराणसारे**—
" अपि वा मातरं गच्छेन्न गच्छेद्देवदारिकाम् । यदि गच्छेत्प्रमादेन गुरुदारसमं स्मृतम् " ॥ इति ।
**विष्णुः** (३३।४-७)-"पितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमनसदृशम् । पितृष्वसृ- ३० मातृष्वसृगमनं च । श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं च । स्वसुः सख्युः पत्न्याः सगोत्राया उत्तमवर्णायाः कुमार्याः रजस्वलायाः शरणागतायाः प्रव्रजितायाः निक्षिप्तायाश्च गमनम् " इति ।
अतिपातकेषु परिगणितानां केषाञ्चिदिह ग्रहणमकामकारविषयम् ।

१ ग–ज । २ ग–सख्याः ।

**उपपातकानि** । उपपातकान्याह **याज्ञवल्क्यः** ( प्रा. २३४–२४२ )
" गोवधो व्रात्यता स्तेयमृणानां चानपक्रिया । अनाहिताग्निता पण्यविक्रयः परिवेदनम् ॥
" भृताद्ध्ययनादानं भृतकाध्यापनं तथा । पारदार्यं पारिवित्त्यं वार्धुष्यं लवणक्रिया ॥
" स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम् । नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ॥
५ " धान्यकुप्यपशुस्तेयमयाज्यानां च याजनम् । पितृमातृगुरुत्यागस्तटाकारामविक्रयः ॥
" कन्याया दूषणं चैव परिविन्दकयाजनम् ।
" आत्मनोऽर्थे क्रियारंभो मद्यपस्त्रीनिषेवणम् । स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च ॥
" इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम् । हिंस्रयन्त्रविधानं च व्यसनान्यात्मविक्रयः ॥
" शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम् । तथैवानाश्रमे वासः परान्नपरिपुष्टता ॥
१० " असच्छास्त्राधिगमनमाकरेष्वधिकारिता । भार्याया विक्रयश्चैषामेकैकमुपपातकम् " ॥ इति ।
काले अनुपनीतत्वं व्रात्यता । सत्यधिकारेऽनाहिताग्निता । ज्येष्ठे सति कनीयसो दाराग्निहोत्रसंयोगः परिवेदनम् । गुरुदारव्यतिरिक्तं पारदार्यम् । कनीयसि कृतविवाहे ज्येष्ठस्य विवाहराहित्यं पारिवित्त्यम् । वार्धुष्यं निषिद्धवृद्धिप्रयोगः । लवणक्रिया लवणोत्पादनम् । निन्दितार्थोपजीवनम् अराजस्थापितार्थोपजीवनम् । व्रतलोपः ब्रह्मचारिणः [1]स्त्र्यादिप्रसङ्गः । कन्याया दूषणं
१५ अङ्गुल्यादिना योनिविदारणं न तु संयोगः । हिंस्रयन्त्रस्य तिलेक्षुपीडाकरस्य प्रवर्तनम् । व्यसनानि मृगयादीनि अष्टादश । आकरेषु स्वर्णाद्युत्पत्तिस्थानेषु । **मनुरपि** ( ११।५९-६६ )—
" गोवधोऽयाज्यसंयाज्यं पारदार्यात्मविक्रयौ । गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥
" परिवित्तता नुजेन परिवेदनमेव च । तयोर्दानं च कन्यायास्तयोर्याजनमेव च ॥
" कन्याया दूषणं चैव वार्धुषिक्यं व्रताच्च्युतिः । तटाकारामदाराणामपत्यस्य च विक्रयः ॥
२० " व्रात्यता बान्धवत्यागो भृताध्यापनमेव च । भृत्या चाध्ययनादानमपण्यानां च विक्रयः ॥
" सर्वाकरेष्वधीकारो महायन्त्रप्रवर्तनम् । हिंस्रौषधस्त्र्युपजीवोऽभिचारो मूलकर्म च ॥
" इन्धनार्थमशुष्काणां द्रुमाणामवपातनम् । आत्मार्थे च क्रियारम्भो निन्दितान्नादनं तथा ॥
" अनाहिताग्निता स्तेयमृणानामनपक्रिया । असच्छास्त्राधिगमनं कौटिल्यं व्यसनक्रिया ॥
"धान्यरौप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम् । स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपपातकम् " ॥ इति ।
२५ **बोधायनः** (२।१।४३-४४)—"अथोपपातकान्यगम्यागमनं गुर्वीं सखीं गुरुसखीमपपात्रां पतितां च गत्वा भैषज्यकरणं ग्रामयाजनं रङ्गोपजीवनं नाट्याचार्यता गोमहिषरक्षणं यच्चान्यदप्येवमयुक्तं कन्यादूषणमिति " । **स्मृत्यन्तरेऽपि**—" विद्वद्ब्राह्मणव्रतभेदाचरणविधवादेवदासीवेश्यावार्धकीदासीगमनान्युपपातकानि " इति । **शङ्खलिखितौ**—" कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो मिथ्याभिशंसी पतितात्यागी अभोज्यभोजी असत्प्रतिग्रही " इति । **बृहद्विष्णुः**—" अभोज्यानां
३० च भक्षणं परस्वापहरणं परदाराभिगमनमयाज्यानां च याजनं द्रुमगुल्मलतौषधीनां हिंसया जीवनमभिचारमूलकर्मसु प्रवृत्तिर्देवर्षिपितॄणामृणानपक्रिया कुशीलवता " इति ।
**संकरीकरणादीन्याह मनुः** ( ११।६८ )—
" खरोष्ट्राश्वमृगेभाणामजाविकवधस्तथा । संकीर्णकरणं ज्ञेयं मीनाहिमहिषस्य च ॥
" क्रिमिकीटवयोहत्यामद्यानुगतभोजनम् । फलैधःकुसुमस्तेयमधैर्यं च मलावहम् ॥ ( ७० )

---

१ क्ष–तका । २ क्ष–स्थेय । ३ कग–पङ्क्ति । ४ क्ष–पाकी ।

"निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्। अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥ (६९)
"ब्राह्मणस्य रुजः कृत्याघ्रातिरघ्रेयमद्ययोः । जैह्म्यं च पुंसि मैथुन्यं जातिभ्रंशकरं स्मृतम्" (६७)॥ इति।
**विष्णुः**–(३८।१-६) "ब्राह्मणस्य रुजः करणमघ्रेयमद्ययोर्घ्रातिः जैह्म्यं पशुष्वयोनिषु पुंसि च मैथुनम्" इति । एतानि जातिभ्रंशकराणि । ग्रामारण्यपशूनां हिंसनं संकरीकरणं निन्दितेभ्यो धनादानं वाणिज्यं कुसीदजीवनमसभ्यभाषणं शूद्रसेवनमित्यपात्रीकरणानि । पक्षिणां जलचराणां जलजानां च घातनं क्रिमिकीटघातनं मद्यानुगतभोजनमिति मलावहानि । यदनुक्तं तत् प्रकीर्णकम्" (३९-१, ४०।१,४१।१-४।४२।१) इति । तदेवं नवविधानि पापानि । यत्तु **कात्यायनेनोक्तम्**—

" महापापं चातिपापं तथा पातकमेव च । प्रासङ्गिकोपपापमित्येवं पञ्चको गणः"॥ इति । अत्र पातकमिति समपातकान्युक्तानि । उपपातकेषु कानिचिदगम्यागमनादीन्यवान्तरभेदाविवक्षया प्रासङ्गिकमित्युक्तानि । अतिपातकाद्यवान्तरभेदाविवक्षया त्रैविध्यमुक्तं **विज्ञानेश्वरीये** (पृ. २४२ पं. १९–२० )—

" महापातकतुल्यानि पापान्युक्तानि यानि वै । तानि पातकसंज्ञानि तन्न्यूनमुपपातकम्" ॥ इति ।

**कामाकामकृतपापविचारः** । अकामकृतानां पापानां प्रायश्चित्तैर्नाश इह व्यवहारश्च भवति । कामकृतानां त्विह व्यवहार्यत्वमात्रम् । तथा च **याज्ञवल्क्यः** ( प्रा. २२६ )—

" प्रायश्चित्तैरपैत्येनो यदज्ञान[3]कृतं भवेत् । कामतो व्यवहार्यस्तु वचनादिह जायते " ॥

**छागलेयः**—" प्रायश्चित्तमकामानां कामावाप्तौ न विद्यते " ।

**वसिष्ठोऽपि** ( १८।१ )—" नाभिसन्धिकृते प्रायश्चित्तम् " इति । **मनुः** ( ११।४६ )—

" अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः । कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात् " ॥

**जाबालिः**—

" अकामकृतपापानां ब्रुवन्ति ब्राह्मणा व्रतम् । कामकारकृतेऽप्येके द्विजानां वृषलस्य च " ॥ इति ।

**देवलोऽपि**—

" अभिसन्धिकृते पापेऽसकृद्वा नेह निष्कृतिः । अपरे निष्कृतिं ब्रूयुरभिसन्धिकृतेऽपि च " ॥

**अङ्गिरास्तु** कामकृते द्विगुणं प्रायश्चित्तमाह—

" अकामतः कृते पापे प्रायश्चित्तं न कामतः । स्यादकामकृते यत्तत् द्विगुणं बुद्धिपूर्वकम्" ॥ इति ।

**स्मृत्यन्तरेऽपि**—" विहितं यदकामानां कामात्तु द्विगुणं भवेत् " ॥ इति । तथा—

" म्लेच्छेनाधिगता शूद्रा ह्यज्ञानात्तु कथंचन । कृच्छ्रत्रयं प्रकुर्वीत ज्ञाने तु द्विगुणं भवेत् "॥ इति।

अत्र **माधवीये** व्यवस्थापितम्—अकामकृते न विप्रतिपत्तिः । कामकृतस्य तु विप्रतिपत्तौ केचिन्निर्णयमाहुः । द्विविधा पापस्य शक्तिः । नरकोत्पादिका व्यवहारनिरोधिका चेति । तन्निवर्तकस्यापि प्रायश्चित्तस्य शक्तिर्द्विविधा । नरकनिवारिका व्यवहारजननी चेति । तत्र प्रायश्चित्ताभाववादिनां मुनीनां नरकनिवारणाभावः अभिप्रेतः । सद्भाववादिनां तु व्यवहारजननी शक्तिरभिप्रेता । द्विगुणप्रायश्चित्तेन इह लोके व्यवहारः सिध्यति । अपरे पुनः–' कामतोऽव्यवहार्यस्तु वचनादिह जायते ' (प्रा. २२६) इति **याज्ञवल्क्यवचने** अव्यवहार्य इति पदं छित्वा कृतप्रायश्चित्तोऽपि अव्यवहार्यः नरकस्य निवृत्तिरस्तीति वदन्ति। अत्र चोपोद्बलकं **मनुवचनम्** ( ११।१९० )—

"बालघ्नांश्च कृतघ्नांश्च विशुद्धावपि धर्मतः । शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत् " ॥ इति ।

---

१ क्ष–रजः कृत्यं । २ ग–न्त्य । ३ क्ष–काम ।

अन्ये तु पूर्वोक्ताङ्गिरःस्मृत्यन्तरवचने कामकृते विशेषेण द्विगुणप्रायश्चित्तावगमात् **मनुना** (११।४५)—"कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्" इति । तत्र विशेषेण प्रायश्चित्ताङ्गीकारात्, **आपस्तम्बेन** च (१।९।२६।७)—"दोषवच्च कर्माभिसन्धिपूर्वं कृत्वानभिसन्धिपूर्वं वाऽब्लिङ्गाभिरप उपस्पृशेद्वारुणीभिर्वा" इति व्यवहारादिविशेषानभिधानेन कामा-
५ कामयोः शुध्यभिधानात्, **गौतमेन** च (१०।२-९) "शिष्टस्याक्रियाप्रतिषिद्धसेवनमिति च । तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसते न कुर्यादित्याहुः । न हि कर्म क्षीयत इति । कुर्यादित्यपरे । पुनःस्तोमेनेष्ट्वा पुनस्सवनमायान्तीति विज्ञायते । व्रात्यस्तोमैश्चेष्ट्वा तरति सर्वं पाप्मानं तरति ब्रह्महत्त्यां योऽश्वमेधेन यजते" इति पूर्वोत्तरपक्षभंग्या पापक्षयस्य दर्शितत्वात्, अकामकृतानां सर्वेषां पापानां तत्तदुक्तप्रायश्चित्तैरिहामुत्र च शुद्धिर्भवति । कामकृतानां च
१० पतनीयव्यातिरिक्तानां द्विगुणप्रायश्चित्तैर्नरकनिवृत्तिरिह व्यवहारश्च सिध्यति । "नाभिसन्धिकृते प्रायश्चित्तम्" इति **वसिष्ठा**दिस्मरणं (१८।१) पतनीयपापविषयम् । तथा च **मनुः** (११।४६)—

"अकामतः कृतं पापं वेदाभ्यासेन शुध्यति । कामतस्तु कृतं मोहात्प्रायश्चित्तैः पृथग्विधैः ॥

"इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते"(८९)॥ इति ।

ब्राह्मणवध इति सुरापानादेरप्युपलक्षणम्

१५ "ब्रह्महत्यासुरापानस्वर्णस्तेयेषु कामतः । कृतेषु निष्कृतिर्नास्ति विहितान्मरणादृते"(५५)॥ इति ।
"यः कामतो महापापं नरः कुर्यात्कथञ्चन । न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते"॥ इति **स्मृतेः** ।
एवं च पतनीये कर्मणि कामकृते मरणान्तिकप्रायश्चित्तेषु कल्मषक्षयो भवत्येव । फलान्तराभावात्
"नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते । कल्मषं तु निर्हण्यत" (१।९।२४।२५) **इत्यापस्तंबस्मरणात्** ।
एतच्च मरणान्तिकप्रायश्चित्तं ब्राह्मणानां कलौ निषिद्धम्

२० "प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् । भृग्वग्निपतनं चैव वृद्धादिमरणं तथा" ॥ इति **कलियुगनिषिद्धधर्ममध्ये** परिगणनात् । "मिथ्यैतदिति **हारीतः** । यो ह्यात्मानं परं वाभिमन्यते अभिशस्त एव स भवति" **इत्यापस्तंबस्मरणात्** (१।१०।२८।१६-१७) । अयमर्थः—एतन्मरणान्तिकप्रायश्चित्तं मिथ्या न कर्तव्यम् । य आत्मानं परं वाऽभिमन्यते मारयति सोऽभिशस्त एव ब्रह्महैव भवतीति । अतः कामकृतमहापातकानां मरणान्तिकप्रायश्चित्तस्य कलौ निषेधात् द्वादशवार्षिकादि-
२५ प्रायश्चित्तैः पापक्षयाभावादिह व्यवहार्यत्वमात्रं सिध्यति । "कामतो व्यवहार्यस्तु" इति **याज्ञवल्क्य**वचनं च महापापविषयम् । उपपातकादावपतनीये पुनः कामकृतेऽपि प्रायश्चित्ते कृते पापक्षयो भवत्येव **मनु**वचनात् (११।४६)—

"अकामतः कृतं पापं वेदाभ्यासेन शुध्यति । कामतस्तु कृतं पापं प्रायश्चित्तैः पृथग्विधैः"॥ इत्याहुः ।

**प्रकाशरहस्यपापप्रायश्चित्तम्** । द्विविधानि पापानि । प्रकाशकृतानि रहस्यकृतानि चेति ।
३० तत्र प्रकाशकृतानां परिषदोऽनुमत्या प्रायश्चित्तं कार्यम् । तथा च **याज्ञवल्क्यः** (प्रा. ३०१)—

"विख्यातदोषः कुर्वीत परिषदोऽनुमते व्रतम्" ॥ इति । **पराशरः** (८।१२)—

"वेदवेदाङ्गविदुषां धर्मशास्त्रं विजानताम् । स्वकर्मरतविप्राणां स्वकं पापं निवेदयेत्" ॥ इति ।
यत्पापं कर्तृव्यतिरिक्तेन केनचिदपि न ज्ञातं तद्रहस्यं तस्य प्रायश्चित्तमपि रहस्येव कर्तव्यम् ।

---

१ कग-मकृतयोः । २ ग-मेने ।

तथा च हारीतः—"रहस्ये रहस्यं प्रकाशे प्रकाशम्" इति। रहस्यत्वादेव नास्ति तत्र परिषदनुमत्यपेक्षा। मनुः (११।२२६–२२९)—
"एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः। अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत्॥
"ख्यापनेनानुतापेन तपसाऽध्ययनेन च। पापकृन्मुच्यते पापात्तथा दानेन चापदि॥
"यथा यथा नरोऽधर्मं स्वयं कृत्वाऽनुभाषते। तथा तथा त्वचेवाहिस्तेनाधर्मेण मुच्यते॥ ५
"यथा यथा मनस्तस्य दुष्कृतं कर्म निन्दति। तथा तथा शरीरं हि तेनाधर्मेण मुच्यते"॥ इति।
परिषल्लक्षणमाह मनुः (१२।११०–११३)—
"दशावरा वा परिषद्यं धर्मं परिकल्पयेत्। त्र्यवरा वापि वृत्तस्था तद्धर्मं न विचालयेत्।
"त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः। त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद् दशावरा॥
"ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च। त्र्यवरा परिषत् ज्ञेया धर्मसंशयनिर्णये॥ १०
"एकोऽपि वेदविद्धर्मं यं व्यवस्येद्विचक्षणः। स विज्ञेयः परो धर्मो नाज्ञानां गदितोऽयुतैः"॥ इति।
याज्ञवल्क्यः (आ. ९)—
"चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा। सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः"॥ इति।
पराशरः (८।१५–३४)—
"चत्वारो वा त्रयो वापि यं ब्रूयुर्वेदपारगाः। स धर्म इति विज्ञेयो नेतरैस्तु सहस्रशः॥ (१५) १५
"चत्वारो वा त्रयो वापि वेदवन्तोऽग्निहोत्रिणः। ब्राह्मणानां समर्था ये[1] परिषत्सा विधीयते॥
"अनाहिताग्नयो येऽन्ये वेदवेदाङ्गपारगाः। पञ्च त्रयो वा धर्मज्ञाः परिषत्सा प्रकीर्तिता॥ (१९)
"मुनीनामात्मविद्यानां द्विजानां यज्ञयाजिनाम्। वेदव्रतेषु स्नातानामेकोऽपि परिषत् भवेत्॥ (२०)
"प्रमाणमार्गं मार्गन्तो यं धर्मं प्रवदन्ति ये। तेषामुद्विजते पापं सद्भावगुणवादिनाम्॥ (१६)
"यथाश्मनि स्थितं तोयं मारुतार्केण शुष्यति। एवं परिषदादेशान्नाशयेत्तत्र दुष्कृतम्॥ (१७) २०
"नैव गच्छति कर्तारं नैव गच्छति पर्षदम्। मारुतार्कादिसंयोगात्पापं नश्यति तोयवत्॥ (१८)
"अमेध्यानि तु सर्वाणि प्रक्षिप्यन्ते यथोदके। तथैव किल्बिषं सर्वं प्रक्षिपेच्च द्विजानले॥ (३०)
"ये पठन्ति द्विजा वेदं पञ्चयज्ञरताश्च ये। त्रैलोक्यं तारयन्त्येते पञ्चेन्द्रियरता अपि॥ (२८)
"धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः। क्रीडार्थमपि यं ब्रूयुः स धर्मः परमो मतः॥ (३३)
"चातुर्विद्यो विकल्पी चाङ्गविद्धर्मपाठकः। वृद्धाश्चाश्रमिणो मुख्याः पर्षदेषा दशावरा"॥ (३४) इति। २५
चतुर्णां वेदानां पारगश्चातुर्वेद्यः। विकल्प्यादिकस्वरूपमुक्तमङ्गिरसा—
"धर्मस्य संपदश्चैव प्रायश्चित्तक्रमस्य च। त्रयाणां यः प्रमाणज्ञः स विकल्पी भवेद् द्विजः॥
"शब्दे छन्दसि कल्पे च शिक्षायां च सुनिश्चितः। ज्योतिषां गणिते चैव स नैरुक्तोऽङ्गविद्भवेत्॥
"वेदविद्याव्रतस्नातः कुलशीलसमन्वितः। अनेकधर्मशास्त्रज्ञः पठ्यते धर्मपाठकः"॥ इति।
"ब्रह्मचर्याश्रमादूर्ध्वं विप्रो वृद्धः प्रकीर्त्यते"। चातुर्वेद्यत्वादिकथितविशेषविशिष्टा गृहस्थाश्रमवर्तिनो दशसंख्याकः पर्षच्छब्दवाच्याः। चत्वारो वापीति ये पूर्वपक्षाः पूर्वमुक्ताः ते सर्वे महापापेभ्योऽर्वाचीनविषया वा युगान्तरविषया वा। यदाह देवलः— ३०
"पापानां तारतम्येन विप्राणां गुरुलाघवम्। एको नार्हति तत्कर्तुमनूचानोऽप्यनुग्रहम्॥

१ क्ष–त्तत्र। २ ग–प्रं। ३ क्ष–ल। ४ क्ष–देषा। ५ क्ष–र्थे। ६ ग–न्द्रूत। ७ क्ष–धर्मपाठक।

" शान्तानां च विदुषां कलौ सङ्घः प्रशस्यते । धर्मज्ञा बहवो विप्राः कर्तुमर्हन्त्यनुग्रहम् " ॥
यत्तूक्तमङ्गिरसा—
" पातके तु शतं पर्षत्सहस्रं महदादिषु । उपपातके तु पञ्चाशत् स्वल्पे स्वल्पं तथा भवेत् " ॥ इति तदभ्यासविषयम् । अङ्गिराः—
५ " आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः । जानन्तो न प्रयच्छन्ति ते तेषां समभागिनः ॥
" तस्मादार्तं समासाद्य ब्राह्मणं तु विशेषतः । जानद्भिर्धर्मपन्थानं न भाव्यं तु पराङ्मुखैः ॥
" अनर्थितैरनाहूतैरपृष्टैश्चैव संसदि । प्रायश्चित्तं न दातव्यं जानद्भिरपि सर्वदा ॥
" यत्पुण्यमुद्धृते विप्रे म्रियमाणे जलादिषु । तत्पुण्यं तारिते पापात्प्रायश्चित्तैस्तु मानवैः ॥
" प्रायश्चित्तविधानेन दुष्कृतान्मोचयेन्नरम् । इहामुत्र सुखं विन्देद्विद्वानायुर्यशो बलम् " ॥ इति ।

१० **परिषद्योग्याः ।**

नामधारकविप्राणां परिषत्त्वं नास्तीत्याह **पराशरः** ( ८।२२ )—
" अत ऊर्ध्वं तु ये विप्राः केवलं नामधारकाः । परिषत्त्वं न तेष्वस्ति सहस्रगुणितेष्वपि" ॥ इति । अत ऊर्ध्वं वर्णितेभ्यो गुणवद्भ्यो ब्राह्मणेभ्यः ऊर्ध्वं तद्व्यतिरिक्ता गुणवद्भ्य ऊर्ध्वमन्ये गुणरहिता इति यावत् । **स एव** ( ८।११ )
१५ "सावित्र्याश्चापि गायत्र्याः सन्ध्योपास्त्यग्निकार्ययोः । अज्ञानात्कृषिकर्तारो ब्राह्मणा नामधारकाः ॥
" यथा काष्ठमयो हस्तिर्यथा चर्ममयो मृगः । ब्राह्मणोऽप्यनधीयानस्त्रयस्ते नामधारकाः ॥
" प्रायश्चित्तं प्रयच्छन्ति ये द्विजा नामधारकाः । ते द्विजाः पापकर्माणः समेता नरकं ययुः " ॥ ययुः यान्तीत्यर्थः । **स एव** ( ८।१२–१४,३५ )—
" अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥
२० " यद्वदन्ति तमोमूढा मूर्खा धर्ममतद्विदः । तत्पापं शतधा भूत्वा तद्वक्तॄनधिगच्छति ।
" अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः । प्रायश्चित्ती भवेत् पूतः किल्बिषं पार्षदं व्रजेत् ॥
" राज्ञश्चानुमते स्थित्वा प्रायश्चित्तं विनिर्दिशेत् । स्वयमेव न कर्तव्यं कर्तव्या स्वल्पनिष्कृतिः "॥

**प्रायश्चित्तविधानस्थलम् । स एव** ( ८।३७ )—
" प्रायश्चित्तं यदा दद्याद्देवतायतनाग्रतः । आत्मकृच्छ्रं ततः कृत्वा जपेद्वै वेदमातरम् " ॥ इति ।
२५ देवतायतनाग्रत इति शैवस्य वैष्णवस्य वा पुरः स्थित्वा निर्देष्टव्यम् । एतत् पुण्यतीर्थादेरप्युपलक्षणम् "देवालये नदीतीरे शुचौ देशे सभास्थले । उपविश्य यथाशास्त्रं प्रायश्चित्तं विनिर्दिशेत्" ॥ इति **स्मृतेः** । एवं प्रायश्चित्तं विनिर्दिश्यानन्तरं निर्देष्टारः सर्वे स्वात्मशुध्यर्थं तत्प्रायश्चित्तानुसारेण किंचित् कृच्छ्रं चरित्वा अनन्तरं वेदमातरं गायत्रीं यथाशक्ति जपेयुः । **अङ्गिराः**—
" उपस्थानं व्रतादेशः चर्याशुद्धिः प्रकाशनम् । प्रायश्चित्तं चतुष्पादं विहितं धर्मकर्तृभिः " ॥ इति ।
३० **पराशरः**—" पापं प्रख्यापयेत्पापी दत्वा धेनुं तथा वृषम् । तिस्रो धेनुर्महापापे दत्वा प्रख्यापयेन्नरः ॥
" द्विगुणे व्रत आदिष्टे दक्षिणा द्विगुणा भवेत् । यावद्व्रतं तु कर्तव्यं दक्षिणा तावती भवेत् ॥
" वित्तशाठ्यं न कुर्वीत सति द्रव्ये फलप्रदम् । विज्ञाप्य पापं सभ्यानां किञ्चिद्दत्वा व्रतं चरेत्" ॥ इति ।

**ब्रह्महत्याप्रायश्चित्तम्** । अथ प्राणिहननप्रायश्चित्तमुच्यते । तत्र ब्रह्मवधस्य महापातकस्य प्रायश्चित्तमाह **पराशरः** ( १२।५८ )—
" चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके । समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् " ॥ इति ।
चातुर्विद्योपपन्नः वेदाध्ययनानुष्ठानवान् । अनेन सर्वा परिषदुपलक्ष्यते । समुद्रे दाशरथिना बद्ध-सेतुः समुद्रसेतुः । तद्यात्रां ब्राह्मणघातके पुरुषे यथाविध्यनुष्ठेयत्वेन निर्दिशेदिति विधिवदित्युक्तम् । ५
कोऽसौ विधिरित्याकांक्षायां तदितिकर्तव्यतामाह **स** एव ( १२।५९–६३ )—
" सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात् समाचरेत् । वर्जयित्वा विकर्मस्थां छत्रोपानद्विवर्जितः ॥
" अहं दुष्कृतकर्मा वै महापातककारकः । गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः ॥
" गोकुलेषु वसेच्चैव ग्रामेषु नगरेषु च । तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च ॥
" एतेषु ख्यापयन्नेनः पुण्यं गत्वा तु सागरम् । १०
" दशयोजनविस्तीर्णं शतयोजनमायतम् । रामचन्द्रसमादिष्टं नलसञ्चयसञ्चितम् ॥
" सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति । सेतुं दृष्ट्वा विशुद्धात्मा अवगाहेत सागरम् " ॥ इति ।
छत्रोपानद्विवर्जित इति न केवलं भिक्षावेलायां किन्तु मार्गगमनेऽपीति द्रष्टव्यम् । अहं दुष्कृत-कर्मेति भिक्षमानेन वक्तव्य इति उक्तिप्रकारोऽभिहितः । अध्वशान्तः तपोवनादिषु निवसेत् । तत्र व्याघ्रादिभये सति ग्रामे नगरे वा प्रविश्य गोशालादेवतायतनादौ पुण्यप्रदेशे निवसेत् । १५
एतेषु ख्यापयन्निति न केवलं भिक्षागृहेष्वेव पापप्रख्यापनं किन्तु निवासस्थानेष्वपीत्यर्थः । सेतुयात्रां समाप्य पुनः कर्तव्यमाह **स** एव ( १२।६४–६६ )—
" पुनः प्रत्यागतो वेश्म वासार्थमुपसर्पति । सपुत्रः सह भृत्यैश्च कुर्याद्ब्राह्मणभोजनम् ॥
" गाश्चैवैकशतं दद्याच्चतुर्वेद्येऽथ दक्षिणाम् । ब्राह्मणानां प्रसादेन ब्रह्महा तु विमुच्यते " ॥ इति ।
सेतुं द्रष्टुमशक्नुवतो भूपतेः प्रायश्चित्तान्तरमाह **स** एव ( १२।६४ )—" यजेत वाश्वमेधेन राजा तु पृथिवीपतिः " इति । कलौ **पराशरोक्तं** प्रायश्चित्तमेव मुख्यम् ( १।२३ )— २०
" कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः । द्वापरे शंखलिखिताः कलौ पाराशराः स्मृताः "॥ इति **स्मरणात्** । **व्यासोऽपि**—
" गत्वा सेतुं समुद्रस्य स्नात्वा तत्र महोदधौ । दृष्ट्वा रामेश्वरं लिङ्गं ब्रह्महा तु विशुध्यति"॥ इति ।
**श्रीरामायणे**— २५
" सेतुबन्ध इति ख्यातं त्रैलोक्येनाभिपूजितम् । एतत्पवित्रं परमं महापातकनाशनम् " ॥ इति ।
प्रायश्चित्तान्तरमाह **याज्ञवल्क्यः** ( प्रा. २४३ )—
"शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् । ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्"इति।
**मनुः** ( ११।७२ )—
"ब्रह्महा द्वादशसमाः कुटीं कृत्वा वने वसेत् । भैक्षाश्यात्मविशुध्यर्थं कृत्वा शवशिरोध्वजम्"॥ इति । ३०
**हेमाद्रौ**—
" अज्ञानात् ब्राह्मणं हत्वा चीरवासा जटी भवेत् । स्वेनैव हतविप्रस्य कपालं धारयेन्मुदा ॥
" तदभावेऽन्यदीयं वा पानार्थं बिभृयात्सदा । तद्वस्त्रं ध्वजदण्डे तु धृत्वा वनचरो भवेत् ॥
" वन्याहारो भवेन्नित्यमेकाहारो मिताशनः । सम्यक् सन्ध्यामुपासीत त्रिकालं स्नानमाचरेत् ॥

१ क्ष–कादशं । २ क्ष–शाब्दानि ।

" अध्यापनं चाध्ययनं वर्जयन् संस्मरेद्धरिम् । ब्रह्मचर्यव्रतं नित्यं चरेत् गन्धादिवर्जितः ॥
" तीर्थान्युपवसेच्चैव पुण्यक्षेत्राश्रमाणि च । यदि वन्यैर्न जीवेत ग्रामे भिक्षां समाचरेत् ॥
" अखण्डेन शरावेण रक्तवर्णेन वर्णतः । वदेच्च ब्रह्महाऽस्मीति सर्वागाराणि पर्यटेत् ॥
" चतुर्वर्णेषु वा भैक्षं त्रिवर्णेष्वथ वा चरेत् । मृष्टामृष्टाविवेकेन तदन्नं चाविकुत्सयन् ॥
५ " द्वादशाब्दं व्रतं कुर्यादेवं हरिपरायणः । व्रतमध्ये मृगैर्वाऽपि रोगैर्वाऽपि हतो यदि ॥
" गोनिमित्तं द्विजार्थं वा नार्यर्थं यदि वा म्रियेत् । ब्रह्महा शुद्धिमाप्नोति द्वादशाब्दव्रतेन वै " ॥ इति।
**आपस्तंबः** ( १।९।२४।२० )—"द्वादशवर्षाणि चरित्वा सिद्धः सद्भिः संप्रयोगः " ॥ इति ।
अत्र **हरदत्तः**—सद्भिः संप्रयुज्यते येन विधिना स कर्तव्यः स उच्यते । कृतप्रायश्चित्तः स्वहस्ते यवसं गृहीत्वा गामाह्वयेत् । सायमागत्य श्रद्दधाना भक्षयति तदा सम्यगनेन व्रतं चरितमिति जानीयात् ।
१० अन्यथा नेति । प्रायश्चित्तान्तरमाह **मनुः** ( ११।७६–७९ )—
" सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् । धनं वा जीवनायालं गृहं वा सपरिच्छदम् ।
" ब्राह्मणार्थे गवार्थे वा सम्यक् प्राणान् परित्यजेत् । मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च"॥ इति
स्वमरणमभ्युपगम्य गोब्राह्मणरक्षणे प्रवृत्तो यदि कथञ्चिज्जीवेत्तदा गोब्राह्मणयोः स गोप्ता जीवन्नपि ब्रह्महत्याया मुक्तो भवति । **स एव** ( ११।७४–७५,७७ )—
१५ " यजेत वाऽश्वमेधेन स्वर्जिता गोसवेन वा । अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुतापि वा ॥
" जपन्वान्यतमं वेदं योजनानां शतं व्रजेत् । ब्रह्महत्यापनोदाय मितभुङ्नियतेन्द्रियः ॥
" हविष्यभुग्वा अनुसरेत्प्रतिस्रोतां सरस्वतीम् । जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम् " ॥
**याज्ञवल्क्यः** ( प्रा. २४४–४५ )—
" ब्राह्मणस्य परित्राणाद्गवां द्वादशकस्य वा । तथाऽश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात् ॥
२० " दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा । दृष्ट्वा पथि निरातङ्कं कृत्वा वा ब्रह्महा शुचिः " ॥ इति ।
आवृत्त्या ब्रह्मवधे आचतुर्थाद्व्रतमावर्तनीयम् । तदाहतुर्मनुगालवौ—
"वधे प्राथमिकादस्मात् द्वितीये द्विगुणं चरेत् । तृतीये त्रिगुणं चैव चतुर्थे नास्ति निष्कृतिः" ॥ इति ।

**वधोद्यमे प्रायश्चित्तम्** । वधोद्यमेऽपि वधप्रायश्चित्तमाह **याज्ञवल्क्यः** ( प्रा. २५२ )—
"चरेद्व्रतमहत्वाऽपि घातार्थं चेत्समाहितः " ॥ इति । **स्मृत्यन्तरेऽपि**—" अहत्वाऽपि यथावर्णं
२५ ब्रह्महत्याव्रतं चरेत् " ॥ इति । यत्तु **वशिष्ठवचनं** 'द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेत् " इति तन्मनोध्यवसितब्रह्महत्यस्य तदैवोपरतजिघांसस्य वेदितव्यमिति **माधवीये** ।

उक्तप्रायश्चित्ताकरणे **राजकृत्यमुक्तम्**—
" पट्टणे वा स्वराष्ट्रे वा यो विप्रो ब्रह्महा भवेत् । ब्रह्महत्यां विनिश्चित्य त्रुटित्वा तच्छिखां ततः ॥
" ब्रह्मसूत्रं तथा छित्वा पिशिताशनवाहनम् । आरोहयित्वा तु तत्काले शवं तप्तमयं लिखेत् ॥
३० " गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः । स्तेये तु श्वपदं कार्यं ब्रह्मण्यशिराः पुमान् ॥
" एवं कृत्वा तु शास्त्रेण निर्वास्यो विषयाद्बहिः ।
" तत्पुत्रा ब्रह्महनने सहायास्ते यदाऽभवन् । तानप्येवं पुनः कृत्वा निर्वास्याः पूर्ववद्बहिः ॥
" तत्क्षेत्रं बहुलं धान्यं पश्वारामादिकं च यत् । तत्सर्वं देवताप्रीत्यै राजा कुर्यात्समाहितः ॥

---

१ ग–सा । २ ग–नुसरेत् । ३ क्ष–हत्वा । ४ कगघ–विधेः । ५ क्ष–विविध । ६ ग–चने । ७ क्ष–विहित । ८ क्ष–तले श्वानं ।

" विचार्य बहुधा राजा तत्पत्नी पुत्रकान् बहून्। दोषवन्तस्तथा तेऽपि कर्तव्या राजवल्लभैः॥
" नो चेत्तद्वृत्तिधान्यादीन् तेभ्यो दत्वाऽथ शिक्षयेत्"॥ इति। पुत्रादीनां दोषाभावे तद्द्रव्यं तेभ्य एव दत्वा ब्रह्महन्त्रा सह संभाषणादिकं न कार्यमिति पुत्रादीन् शिक्षयेदित्यर्थः। **स्मृत्यन्तरे**—
" अयोरूपं द्विजं कृत्वा मूर्धहीनं प्रतापयेत्। अङ्कयित्वा ललाटे तु देशान्निर्वासयेद्बहिः॥
" द्वादशाब्दविधानेन शुद्धो भवितुमर्हति। अशक्तो व्रतमाचर्तुमेवं कृत्वा विशुध्यति"। ५
**जनकादिहत्यायां** प्रायश्चित्तान्तरमुक्तम् **स्कान्दे**—
" अज्ञानाज्जनकं हन्यान्निमित्तैर्बहुभिर्द्विजः। चतुर्विंशति वर्षाणि व्रतं कृत्वा विशुध्यति॥
" द्विगुणं च गवां दानं कृत्वा शुद्धिमवाप्नुयात्। दीक्षितं ब्राह्मणं हत्वा द्विगुणं व्रतमाचरेत्॥
" मातामहं मातुलं च स्यालं जामातरं तथा। आचार्यस्य वधे चैव व्रतमुक्तं चतुर्गुणम्"॥ इति।
**स एव**—" स्नातकं ऋत्विजं हत्वा द्विगुणं व्रतमाचरेत्"॥ इति। चत्वारिंशत्संस्कारपूतः १० स्नातकः। उत्पाद्य पुत्रं संस्कृत्येत्युक्तलक्षण आचार्यः। **दक्षः** ( ३।२६ )—
" सममब्राह्मणे देयं द्विगुणं ब्राह्मणब्रुवे। आचार्ये शतसाहस्रं सोदर्ये दत्तमक्षयम्"॥ इति प्रतिपाद्योक्तवान्
" समद्विगुणसाहस्रमानन्त्यं च यथाक्रमम्। दाने फलविशेषः स्याद्धिंसायां तद्वदेव हि"॥ इति।
**आपस्तम्बः** (१।९।२४।२४)—" गुरुं हत्वा श्रोत्रियं वा कर्मसमाप्तमेतेनैव विधिनोत्तमादुच्छ्वा- १५ साच्चरेन्नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते" इति। गुरुः पित्राचार्यादिः। श्रोत्रियोऽधीतवेदः। सोमान्तानि कर्माणि समाप्तानि यस्य स कर्मसमाप्तः। तौ हत्वा एतेन कुटिं कृत्वेत्यनन्तरोक्तेन। ओत्तमादुच्छ्वासादाप्राणवियोगादित्यर्थः। भ्रूणहत्याया अपि यावज्जीवं व्रतधारणमुक्तमा**पस्तम्बेन** (१।९।२४।२४)—" एतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत्"। इति।
"भ्रूणहा द्वादशसमाः कपाली" **बोधायन**वचनं भ्रूणहत्यासमपापविषयम्। भ्रूणः साङ्गवेदीति निश्चयः। २०

**क्षत्रियादिकृतब्रह्महत्याप्रायश्चित्तम्**। क्षत्रियादीनां ब्राह्मणवधे प्रायश्चित्तमाह **व्यासः**—
" अज्ञानात् बाहुजो विप्रं हत्वा विविधसाधनैः। पश्चात्तापसमायुक्तो द्विगुणं व्रतमाचरेत्॥
" अज्ञानादूरुजो हत्वा ब्राह्मणं त्रिगुणं चरेत्। पादजो ब्राह्मणं हत्वा मुसलैर्वधमर्हति॥
" केचित्कारीषदाहेन वधमिच्छन्ति पावनम्। ब्राह्मणीं स्थविरां हत्वा विधवां च सुवासिनीम्॥
" बालं कन्यां यदा हन्यात्कारीषेणैव दाहयेत्"॥ **स्मृत्यन्तरेऽपि**— २५
" द्विगुणं क्षत्रियस्योक्तं त्रिगुणं तद्विशः स्मृतम्। ब्राह्मणं हन्ति यः शूद्रस्तस्य दण्डो वधः स्मृतः॥
" कन्याबालवधे गर्भबाधने विप्रयोषिताम्। पूर्ववद्दण्डयेद्राजा ह्यन्यथा नरकं व्रजेत्"॥ इति।
**गौतमः** ( १२।१ )—"शूद्रो द्विजातीनतिसन्धायाभिहत्य च वाक्दण्डपारुष्याभ्यामंगमोच्यो येनोपहन्यात्"॥ इति। क्षत्रियादिवधे प्रायश्चित्तमाह **मनुः** ( ११।१२९–१३० )—
" तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः। वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः॥ ३०
" अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः। ऋषभैकसहस्रा गां दद्याच्छुध्यर्थमात्मनः॥
" प्रमाप्य वैश्यं वृत्तस्थं दद्याच्चैकशतं गवाम्। एतदेव व्रतं कृत्स्नं षाण्मासाच्छूद्रहा चरेत्॥
" ऋषभैका दशा वापि दद्याद्विप्राय गास्तथा"॥ इति।

---

१ क्ष–धो। २ ग–त्त। ३ क–व्रत।

**पराशरः** ( ६।१६ )—
"वैश्यं वा क्षत्रियं वापि निर्दोषं योऽभिघातयेत् । सोऽपि कृच्छ्रद्वयं कुर्यात् गास्त्रिंशद्दक्षिणां ददत्" ॥ इति ।
"शिल्पिनं कारुकं शूद्रं स्त्रियं वा यस्तु घातयेत् । प्राजापत्यद्वयं कृत्वा वृषैकादश दक्षिणा" ॥ इति ।
वैश्यादिवधे प्रकारान्तरेणापि प्रायश्चित्तमाह स एव ( ६।१७ )—
५ "वैश्यं शूद्रं क्रियासक्तं विकर्मस्थं द्विजोत्तमम् । हत्वा चान्द्रायणं तस्य त्रिंशद्गाश्चैव दक्षिणाम्" ॥ इति ।
ईषत्सुवृत्तं वैश्यं विहितसकलक्रियासक्तं शूद्रं द्विजोत्तमशब्दो विप्रे प्रसिद्धः । क्षत्रियेऽपि कथंचिद्वर्तयितुं शक्यम् । द्विजशब्दाभिधेयं वैश्यमपेक्ष्य तस्योत्तमत्वात् । तत्र क्षत्रियपक्षे विकर्मणि कस्मिंश्चित् ब्रह्मघातादौ तिष्ठतीति विकर्मस्थः । विप्रपक्षे तु ब्रह्मघातादिषु बहुष्वावृत्तेषु तिष्ठतीति विकर्मस्थः । ब्राह्मणं विकर्मस्थं बहुब्राह्मणघातादिषु तिष्ठन्तं ब्राह्मणघातादौ क्वचित् स्थितं क्षत्रियं
१० वा हत्वा वर्तमानस्य चान्द्रायणं दक्षिणामुक्तं च निर्दिशेदिति योजनीयम् । एवं च सति चतुर्वर्णविषयमेकं प्रायश्चित्तं न्यायदर्शिनामेतत्संपद्यते । हत्वा यो वर्तते तस्येति योजनीयम् । दक्षिणां निर्दिशेदिति शेषः । **षट्त्रिंशन्मते**—
" षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् । चान्द्रायणं प्रकुर्वीत पराकद्वयमेव वा " ॥ इति ।
**स्मृत्यन्तरे**—" शूद्रं हन्ति द्विजो यस्तु निमित्तैर्हननोचितैः ।
१५ " दद्याद्दश गवां विप्रः पुनः संस्कारमर्हति । पञ्चगव्यं पिबेत्पश्चाच्छुद्धो भवति निश्चितम् ।
" तद्दारहननेऽप्यर्धं तत्पुत्रहननेऽपि च । हते शिशौ च तद्गर्भे तत्तदर्धं यथाक्रमम् " ॥ इति ।
**मनुः** ( ११।१३८ )—
"दृतिकार्मुकबस्तावीन् पृथक् दद्यात् विशुद्धये । चतुर्णामपि वर्णानां नारीर्हत्वानवस्थिता " ॥ इति ।
दृतिः जलधारणचर्मकोशः । **याज्ञवल्क्यः** ( प्रा. २६८–२६९ )—
२० " दुर्वृत्तब्रह्मक्षत्रविट्शूद्रयोषाः प्रमाप्य तु । दृतिं धनुर्बस्तमविं क्रमाद्दद्याद्विशुद्धये ॥
" अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत् " ॥ इति ।
चातुर्वर्ण्यकर्तृके चण्डालवधे प्रायश्चित्तं क्रमेणाह **पराशरः** ( ६।१८–२० )—
" चण्डालं हतवान् कश्चिद्ब्राह्मणो यदि कंचन । प्राजापत्यं चरेत्कृच्छ्रं गोद्वयं दक्षिणां ददत् ॥
" चोरौ श्वपाकचण्डालौ विप्रेणाभिहतौ यदि । अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति" ॥ इति ।
२५ "क्षत्रियेणापि वैश्येन शूद्रेणैवेतरेण वा । चण्डालस्य वधे प्राप्ते कृच्छ्रार्धेन विशुध्यति " ॥ इति ।
इतरो मूर्धावसिक्तसूतादिः ।

**शस्त्रग्रहणविचारः** । **आपस्तम्बः** ( १।१०।२९।६ )—" परीक्षार्थोऽपि ब्राह्मण आयुधं नाददीत" इति । तस्य प्रतिप्रसवमाह स एव (१।१०।२९।७)–यो हिंसार्थमभिक्रामन्तं हन्ति मन्युरेव मन्युं स्पृशति न तस्मिन् दोष इति पुराणे ' इति ॥ **वसिष्ठबोधायनौ** ( ३।१८ )—
३० " स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम् । न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति "॥ इति
**मनुरपि** ( ८।३४९–३५० )—
" शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते । द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥
" आत्मनश्च परित्राणे दक्षिणानां च सङ्गरे । स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति "॥ इति ।
**गौतमः** ( ८।२५ )–"प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत" ॥ इति । **वसिष्ठः** ( ३।१६–१७)—
३५ " अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरौ चैव षडेते त्वाततायिनः ॥
"आततायिनमायान्तमपि वेदान्तपारगम् । जिघांसन्तं जिघांसीयान्न तेन भ्रूणहा भवेत् " ॥ इति ।

१ कग–वि । २ क्ष–च ।

**गोवधप्रायश्चित्तम्** । गोवधस्य प्रायश्चित्तं दर्शयति **पराशरः** ( १०।२० )—
" सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम् । गवां मध्ये वसेद्रात्रौ दिवा गा अप्यनुव्रजेत् ॥
" उष्णे वर्षति शीते वा मारुते वाति वा भृशम् । न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥
" आत्मनो यदि वाऽन्येषां गृहे क्षेत्रे खलेऽथ वा । भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम् ॥
" पिबन्तीषु पिबेत्तोयं संविशन्तीषु संविशेत् । पतितां पङ्कलग्नां वा सर्वप्राणैः समुद्धरेत् ॥ ५
" गोवधस्यानुरूपेण प्राजापत्यं विनिर्दिशेत् । प्राजापत्यं ततः कृच्छ्रं विभजेत चतुर्विधम् ॥
" एकाहमेकभक्ताशी एकाहं नक्तभोजनः । अयाचिताश्येकमह एकाहं मारुताशनः ॥
" दिनद्वयं चैकभक्तो द्विदिनं नक्तभोजनः । दिनद्वयमयाची स्यात् द्विदिनं मारुताशनः ॥
" त्रिदिनं चैकभुक्ताशी त्रिदिनं नक्तभोजनः । दिनत्रयमयाची स्यात्रिदिनं मारुताशनः ॥
" चतुरं त्वेकभक्ताशी चतुरं नक्तभोजनः । चतुर्दिनमयाची स्याच्चतुरहं मारुताशनः " ॥ इति । १०
एते चत्वारः कल्पाः वध्यभेदेन योज्याः । तद्यथा—एकहायनस्य वधे प्रथमः द्विहायनस्य वधे द्वितीयः । त्रिहायनस्य वधे तृतीयः । उपरितनवयस्कस्य वधे चतुर्थः ।
यथोक्तव्रतचरणानन्तरकर्तव्यमाह **स एव** ( १०।२३ )—
" प्रायश्चित्ते ततश्चीर्णे कुर्यात् ब्राह्मणभोजनम् । विप्राणां दक्षिणां दद्यात्पवित्राणि जपेद्द्विजः ॥
" ब्राह्मणान् भोजयित्वा तु गोघ्नः शुध्येन्न संशयः " ॥ **याज्ञवल्क्यः** ( प्रा. २६३–२६४ )— १५
" पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयतः । गोष्ठेशयो गोनुगामी गोप्रदानेन शुध्यति ।
" कृच्छ्रं चैवातिकृच्छ्रं च चरेद्वापि समाहितः । दद्यात्रिरात्रं वोपोष्य वृषभैकादशास्तु गाः " ॥ इति ।

**गोवधनिमित्तान्याह पराशरः** ( ९।४ )—"रोधबन्धनयोक्त्राणि घातश्चेति चतुर्विधम् " । वधनिमित्तमिति शेषः । तेषु वधेषु प्रायश्चित्तान्याह **स एव**
" एकपादं चरेद्रोधे द्वौ पादौ बन्धने चरेत् । योक्त्रेषु पादहीनं तु चरेत्सर्वं निपातने " ॥ इति । २०
पूर्वोक्तप्राजापत्यादिव्रतस्य पादादिभेदेन रोधादिवधेषु प्रायश्चित्तान्यवगन्तव्यानि ।
रोधबन्धने[1] हितेऽहिते च । तत्राहितस्य वधनिमित्तस्य रोधादेः स्वरूपमाह **पराशरः** —
" गोवाटे वा गृहे वापि दुर्गेष्वप्यसमस्थले । नदीष्वथ समुद्रेषु चान्येषु च नदीमुखे ॥
" दग्धदेशे मृता गावस्तम्भनाद्रोध उच्यते । योक्त्रदामकदोरैश्च कण्ठाभरणभूषणैः ॥
" गृहे वापि वने वापि बद्धा स्याद्गौर्मृता यदि । तदेव बन्धनं विद्यात्कामाकामकृतं यदि ॥ २५
" हले वा शकटे पङ्क्तौ पृष्ठे वा पीडितो नरैः । गोपतिर्मृतिमाप्नोति योक्त्रा भवति तद्वधे ॥
" मत्तः प्रमत्त उन्मत्तश्चेतनो वाप्यचेतनः । कामाकामकृतक्रोधो दण्डैर्हन्यादथोपलैः ॥

" प्रहता वा मृता वापि तद्धि हेतुर्निपातने " ॥ इति । अन्येषु वापीकूपादिषु । नदीमुखं समुद्रनदीसङ्गप्रदेशः । दग्धदेशः दावादिभिर्दग्धः सन्नुष्णभस्माक्रान्तप्रदेशः । एषु स्थानेषु स्तम्भनात् गावो मृताः स्युः । अतस्तादृशं स्तंभनं रोध उच्यते । योक्त्रं पाशः । शकटयुगच्छिद्रबद्धः । ३० दामकं धेनुबन्धनहेतुपाशः । दोरं रज्जुमात्रम् । कण्ठाभरणं किङ्किण्यादिः । भूषणं ललाटादौ बद्धवराटिकादिपङ्क्तिः । खले मेधीबन्धनम् । गोपतिः बलीवर्दः । मत्तो धनादिदृप्तः । प्रमत्तः मद्यपानादिना परवशः । उन्मत्तः व्याध्यादिना भ्रान्तः । चेतनः लोकव्यवहारक्षमः । अचेतनो मुग्धः । मारयिष्यामीति-

१ क्ष–पि; वि ।

बुद्धिः कामः । व्यर्थचेष्टामात्रमकामः । ताभ्यामुत्पादितः । क्रोधो यस्यासौ दण्डादिभिर्यदि हन्यात्तदा मरणमन्तरेण केवलं प्रहृता स्यात् कामकृतस्संप्रहारो घातः । अकामकृतं तु मारणं घात इत्यर्थः । दण्डलक्षणमुक्तं तेनैव ( ९।२ )—

" अङ्गुष्ठमात्रस्थूलस्तु बाहुमात्रप्रमाणकः । आर्द्रस्तु स पलाशश्च दण्ड इत्यभिधीयते " ॥

५ अधिकप्रमाणदण्डादिभिर्मारणे तु प्रायश्चित्तद्वैगुण्यमाह स एव ( ९।३ )—

" दण्डादूर्ध्वं यदाऽन्येन प्रहाराद्यदि पातयेत् । प्रायश्चित्तं तदा प्रोक्तं द्विगुणं गोवधे चरेत् " ॥

दण्डाधिकमानेन लगुडादिना मारणे अकामकृतेऽपि द्विगुणं चरेदित्यर्थः ।

द्विगुणस्य[1] प्रायश्चित्तस्य निमित्तान्तरमाह स एव ( ९।४६ )

"व्यापन्नानां बहूनां च बन्धने रोधनेऽपि च । द्विगुणं विहितं तस्य प्रायश्चित्तं विशुद्धये " ॥ इति ।

१० कामकृते गोवधे निमित्तविशेषानुपजीव्यप्रायश्चित्तविशेषान् दक्षिणासहितानाह स एव (९।२०)—

" काष्ठलोष्ठकपाषाणैः शस्त्रेणैवोद्धतो बलात् । व्यापादयति यो गां तु तस्य शुद्धिं विनिर्दिशेत् ॥

" चरेत्सान्तपनं काष्ठे प्राजापत्ये तु लोष्ठके । तप्तकृच्छ्रं तु पाषाणे शस्त्रपातेऽतिकृच्छ्रकम् ।

" पञ्च सान्तपने गावः प्राजापत्ये तथा त्रयः । तप्तकृच्छ्रे भवत्यष्टावतिकृच्छ्रे त्रयोदश " ॥ इति ।

सान्तपनादीनां स्वरूपमग्रे वक्ष्यते ।

१५ गृहे बद्धस्य गोर्बन्धनिमित्ते मरणे प्रायश्चित्तमाह स एव ( ९।३२)—

" बन्धपाशनिबद्धाङ्गो म्रियेत यदि गोपशुः । भवने तस्य पापी स्यात् प्रायश्चित्तार्धमर्हति " ॥ इति ।

शृङ्गभङ्गादौ स एवाह ( ९।१७ )—

" पाषाणेनैव दण्डेन गावो येनाभिघातिताः । शृङ्गभङ्गे चरेत्पादं द्वौ पादौ नेत्रघातने ॥

" लाङ्गूले पादकृच्छ्रं तु द्वौ पादावस्थिभञ्जने । त्रिपादं चैव कर्णे तु चरेत्सर्वं निपातने ॥

२० " अतिदाहे चरेत्पादं द्वौ पादावतिवाहने । नासिक्ये पादहीनं तु चरेत्सर्वं निपातने ॥

" एका चेद्बहुभिः काचिद्दैवाद्व्यापादिता यदि । पादं पादं तु हत्यायाश्चरेयुस्ते पृथक् पृथक् ॥

" वाहनात्तु विपद्येत अनड्वान्योक्त्रयन्त्रितः । उक्तं पराशरेणैव ह्येकं पादं यथाविधि ॥

" प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयन् । गवाशनेषु विक्रीणन् ततः प्राप्नोति गोवधम् " ॥ इति ।

अङ्गुष्ठप्रमाणदण्डेन सञ्चारणाय प्रहारे क्वचित्प्रायश्चित्ताभावमाह स एव ( ९।११ )—

२५ " मूर्च्छितः पतितो वापि दण्डेनाभिहतः स तु । उत्थितस्तु यदा गच्छेत्पञ्च सप्त दशैव वा ॥

" ग्रासं वा यदि गृह्णीयात्तोयं वापि पिबेद्यदि । पूर्वं व्याध्युपसृष्टश्चेत्प्रायश्चित्तं न विद्यते " ॥ इति ।

अन्यत्रापि क्वचित्प्रायश्चित्ताभावमाहाङ्गिराः—" सायं सङ्गोपनार्थं तु न दुष्येद्रोधबन्धयोः " इति ।

पराशरोऽपि ( ९।१ )—

" गवां संरक्षणार्थाय न दुष्येद्रोधबन्धयोः । तद्वधं तु न तं विद्यात्कामाकामकृतं तथा ॥

३० " कूपखाते तटाखाते नदीखाते तथैव च । अन्येषु धर्मखातेषु प्रायश्चित्तं न विद्यते ॥

" सङ्ग्रामप्रहृता ये च ये दग्धा[2] वेश्मकेषु च । दवाग्निग्रामघातेषु प्रायश्चित्तं न विद्यते ॥

" ग्रामघाते शरौघेण वेश्मभङ्गान्निपातने । अतिवृष्टिहतानां च प्रायश्चित्तं न विद्यते ॥

" यन्त्रिता गौश्चिकित्सार्थं गूढगर्भविमोचने । यत्ने कृते विपद्येत्तु[3] प्रायश्चित्तं न विद्यते ॥

" केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् । द्विगुणे व्रत आदिष्टे द्विगुणां दक्षिणां भवेत् ॥

---

१ क्ष—द्विगुणस्य प्रायश्चित्तमाह । २ गघख—दह । ३ क्ष—घा ।

" राजा वा राजमात्रो वा ब्राह्मणो वा बहुश्रुतः । अकृत्वा वपनं तस्य प्रायश्चित्तं विनिर्दिशेत् ॥
" सर्वान् केशान् समुच्छित्य छेदयेदङ्गुलिद्वयम् । एवं नारीकुमारीणां शिरसो मुण्डनं स्मृतम् ॥
" न स्त्रिया केशवपनं न दूरे शयनासनम् । गृहेषु नियतं तिष्ठेच्छुचिर्नियममाचरेत् ।
" इह यो गोवधं कृत्वा प्रच्छादयितुमिच्छति । स याति नरकं घोरं कालसूत्रमसंशयः ॥
" विमुक्तो नरकात्तस्मान्मर्त्यलोकेषु जायते । क्लीबो दुःखी च कुष्ठी च सप्तजन्मनि वै नरः ॥ ५
" तस्मात्प्रकाशयेत्पापं स्वधर्मं सततं चरेत् । स्त्रीबालनृपगोविप्रेष्वतिकोपं विवर्जयेत् " ॥
**हेमाद्रौ**—"यो विप्रो वृषभं हन्याच्छिवलिङ्गाङ्कितं तनौ । त्रिवारं क्ष्मां परिक्रम्य ब्रह्मचर्यव्रते स्थितः ॥
" धनुष्कोटिं ततो गत्वा गन्धमादनपर्वते । तत्र स्नात्वा त्रिरात्रं च रामलिङ्गं निरीक्ष्य च ॥
" कृत्वा चान्द्रायणं कृच्छ्रमथ शुध्येन्न संशयः " ॥ **तत्रैव**—
" अनड्वान् हन्यते विप्रैरश्मदण्डशिलादिभिः । तप्तकृच्छ्रत्रयं कृत्वा पिबेयुः पञ्चगव्यकम् ॥ १०
" शुद्धिमाप्नुयुरेतेन नान्यथा शुद्धिरिष्यते " ॥ इति ।

**प्राण्यन्तरहनने प्रायश्चित्तम्** । प्रसङ्गात्प्राण्यन्तरहननस्यापि प्रायश्चित्तमुच्यते । तत्र **मनुः** ( ११।१३१–१३२, १४० )—
" मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च । श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ॥
" पयः पिबेत् त्रिरात्रं वा योजनं वा वने व्रजेत् । उपस्पृशेत्स्रवन्त्यां वा सूक्तं वाग्दैवतं जपेत् ॥ १५
" अस्थिमतां तु सत्त्वानां सहस्रस्य प्रमापणे । पूर्णे चानस्यानस्थ्नां तु शूद्रहत्याव्रतं चरेत् " ॥
पक्षिषु कृम्यादिषु च अस्थिमत्सहस्रवधे शकटपरिमितानस्थिमद्वधे च शूद्रहत्याव्रतं चरेदित्यर्थः । **आपस्तम्बः**—( १।९।२५।१३ ) " वायसप्रचलाकबर्हिणचक्रवाकहंसभासमण्डूकनकुलडेरिका-श्वहिंसायां शूद्रवत्प्रायश्चित्तम् " इति । प्रत्येकवधे तु **स एव**—
" किञ्चिदेव तु विप्राय दद्यादस्थिमतां वधे । अनस्थ्नां चैव हिंसायां प्राणायामेन शुध्यति " ॥ २०
**पराशरः** ( ६।३ )—
" हत्वा मूषिकमार्जारसर्पाजगरडुण्डुभान् । कृसरं भोजयेद्विप्रान् लोहदण्डश्च दक्षिणा " ॥ इति ।
कृसरं तिलमुद्गमिश्रमन्नम् । लोहं कृष्णायसम् । **याज्ञवल्क्यः** ( प्रा. २७०–२७६ )—
" मार्जारगोधानकुलमण्डूकांश्च पतत्रिणः । हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रं वा पादकं चरेत् ॥
" गजे नीलवृषाः पञ्च शुकवत्सो द्विहायनः । खराजमेषेषु वृषो देयः क्रौञ्चे द्विहायनः ॥ २५
" हंसश्येनकपिक्रव्याज्जलस्थलशिखण्डिनः । भासं च हत्वा गां दद्यात्क्रव्यादं तु सवत्सकाम् ॥
" उरगेष्वायसो दण्डः पण्डके त्रपुसीसकम् । कोले घृतघटो देय उष्ट्रे कुञ्जो हयेऽशुकम् ॥
" तित्तिरौ तु तिलद्रोणं गजादीनामशक्नुवन् । दातुं दानं चरेत्कृच्छ्रमेकैकस्य विशुद्धये ॥
" किञ्चित्सास्थिवधे देयं प्राणायामस्त्वनस्थिके । वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतम् ॥
" स्यादौषधिवृथाच्छेदे क्षीराशीगोनुगो दिनम् " ॥ इति । ३०
**पराशरः**—" गजस्य चतुरङ्गस्य महिषोष्ट्रनिपातने । प्रायश्चित्तमहोरात्रं त्रिसन्ध्यामवगाहनम् ॥
" कुरङ्गं वानरं सिंहं चित्रं व्याघ्रं तु घातयन् । शुध्यतेऽथ त्रिरात्रेण विप्राणां तर्पणेन च ॥
" वृकजम्बूकऋक्षाणां तरक्षुश्वानघातकः । तिलप्रस्थं द्विजे दद्याद्वायुभक्षो दिनत्रयम् ॥
" मृगरोहिद्वराहाणां वधे बस्तस्य घातकः । अफालकृष्टमश्नीयादहोरात्रमुपोष्य सः ॥

---

१ क्ष–डि । २ क्ष–सृ । ३ गघ–मने ।

" शिंशुमारं तथा गोधां हत्वा कूर्मं च शल्यकम्। वृन्ताकफलभक्षी चाप्यहोरात्रेण शुध्यति ॥
" एवं चतुष्पदानां च सर्वेषां वनचारिणाम्। अहोरात्रोषितस्तिष्ठेज्जपन्वै जातवेदसम्॥
" क्रौञ्चसारसहंसांश्च चक्रवाकांश्च कुक्कटम्। जालपादं च शरभमहोरात्रेण शुध्यति ॥
" बलाकटिट्टिभौ वापि शुकपारावतावपि। अहिनक्रविघाती च शुध्यते नक्तभोजनात् ॥
५ " वृककाककपोतानां शारीतित्तिरिघातकः। अन्तर्जले उभे सन्ध्ये प्राणायामेन शुध्यति ॥
" गृध्रश्येनशशादानामुलूकस्य च घातकः। अपक्काशी दिनं तिष्ठेत्त्रिकालं मारुताशनः॥
" वल्गुलीटिट्टिभानां च कोकिलाखञ्जरीटके। लाविकारक्तपक्षेषु शुध्यते नक्तभोजनात् ॥
" कारण्डवचकोराणां पिङ्गलाकुररस्य च। भारद्वाजादिकं हत्वा शिवं पूज्य विशुध्यति ॥
" भेरुण्डचाषभासांश्च पारावतकपिञ्जलौ। पक्षिणां चैव सर्वेषामहोरात्रमभोजनम्" ॥
१० **हेमाद्रौ**—"महिषीहनने विप्रो महासान्तपनं चरेत्। स चेद्दोग्ध्री बालवत्सा महासान्तपनद्वयम्" ॥

**वृक्षच्छेदादिप्रायश्चित्तम्।**

" इन्धनार्थं द्रुमच्छेदी तद्दोषस्योपशान्तये। प्राजापत्यं सकृत्कृत्वा शुद्धिमाप्नोत्यनुत्तमाम्॥
" कृष्यर्थमिन्धनार्थं वा यज्ञवृक्षविभेदने। पराकं तत्र कुर्वीत शुद्धो भवति वृक्षहा ॥
" बिल्वाश्वत्थौ यदा छिंद्यात्तदा चान्द्रायणं चरेत्। पुष्पारामस्य विच्छेदी वनद्रोहीति गद्यते ॥
१५ " तद्दोषपरिहारार्थं गायत्र्या लक्षमुच्यते।
" तिन्तिणीचूतयोश्छेदे बहुजन्तूपकारकात्। कपित्थामलकच्छेदे सम्यक् चान्द्रायणं चरेत् ॥
" कोविदारतरौ निम्बे प्राजापत्यं विशोधनम्। खर्जूरे नालिकेरे च तालहिन्तालयोस्तथा ॥
" तप्तकृच्छ्रं चरेद्विद्वान् छेददोषोपशान्तये।
" जम्बीरमातुलङ्गादि च्छित्वा पापविशुद्धये। सम्यक् स्नात्वा शुचिर्भूत्वा गीताशास्त्रं पठेत्क्रमात्।
२० " तटाककूपकासारच्छेदने विप्रसत्तमः। पूर्ववत्तं दृढं कृत्वा प्राजापत्यं समाचरेत्।
" विष्णवालयादिविच्छेदे तद्वध्दैन्दवमाचरेत्। शून्यालयस्य विच्छेदे पराकं द्विजसत्तमः" ॥ इति।

**याज्ञवल्क्यः** (प्रा. २९६)—
" वृक्षगुल्मलतानां तु छेदने जप्यमृक्शतम्। स्याद्दोषधीवृथाछेदी क्षीराशी गोनुगो दिनम्" ॥ इति।
अत्र वृथाछेदीति विशेषणाद्यज्ञार्थछेदने न दोषः। यत्तु **शङ्खवचनम्**—" संवत्सरं व्रतं कुर्या-
२५ च्छित्वा वृक्षं फलप्रदम्" इति तत् छेदनावृत्तिविषयम्। दृष्टार्थत्वेऽपि कर्षणाङ्गभूतहलाद्यर्थत्वे न दोषः। " फलपुष्पोपवनादीन्न हिंस्यात्। पादपान् कर्षणार्थमुपहन्यात्" इति **स्मृतेः**। महातटाकछेदे विशेषमाह **देवलः**—" बहुधान्योद्भवस्याथ तटाकस्य विभेदने।
" ब्रह्महत्याव्रतं कृत्वा कपालध्वजवर्जितः। पुनः संस्कारकृत्पश्चाच्छुद्धिमाप्नोत्यसंशयः" ॥

**सुरापानादिप्रायश्चित्तम्।** अथ सुरापानादेः प्रायश्चित्तमुच्यते। पिष्टादिजन्यो द्रव्य-
३० विशेषः सुरा। तथा च **मनुः** (११।९४,९३,९५)—
" गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा। यथैवैका न पातव्या तथा सर्वा द्विजोत्तमैः ॥
" सुरा वै मलमन्नानां पाप्मा च मलमुच्यते। तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥
" यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्। तद्ब्राह्मणेन नात्तव्यं देवानामश्नमर्हति" ॥ इति।

---

१ ग–का। २ क्ष–अर्दीनबकघाती। ३ क्ष–ह्रे। ४ क्ष–गायत्र्याहितगम्यते।

राजन्यवैश्ययोः सुरापाननिषेधः पैष्टीविषयः । गौडीमाध्व्योरेकादशसु मद्येष्वनुक्रमणात्तत्पाने तयोर्दोषाभावात् । अत एव ‘ सुरासवं सुरारूपं मद्यं ब्राह्मणेन नाक्तव्यम् ’ इति ब्राह्मणस्य तन्निषेधः । पैष्ट्या अकामकृते सकृत्पाने गौडीमाध्व्योरसकृत्पाने कामकृते च ब्राह्मणस्य प्रायश्चित्तं तुल्यम् । **श्रुतिरपि**—“न सुरां पिबेत् न कलञ्जं भक्षयेत् । न तस्य वै प्रायश्चित्तम् । मरणान्तमेव” इति । मरणान्तमेव प्रायश्चित्तमन्यत्तु नास्तीत्यर्थः । तथा **चापस्तम्बः** ( १।९।२५।३ )—“सुरापोऽग्निस्पर्शां सुरां पिबेत् मृतः शुद्धो भवति ” इति । **पराशरः**— ५

“ सुरापानं सकृत्कृत्वाऽग्निवर्णां सुरां पिबेत् । स पावयेदथात्मानमिह लोके परत्र च ” ॥ इति ।

**मनुः** ( ११।९०-९१ )—

“ सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् । तया काये विनिर्दग्धे मुच्यते किल्बिषात्ततः ॥

“ गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा । पयोघृतं वा मरणात् गोशकृद्रसमेव वा ” ॥ इति । १०

कलौ मरणान्तप्रायश्चित्तस्य निषिद्धत्वात् तदभिप्रायेण प्रायश्चित्तान्तरमाह **स एव** ( ११।९२ )—

“ कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि । सुरापानापनुत्यर्थं वालवासा ध्वजी जटी ” ॥

एतज्जिह्वास्पृष्टमात्रविषयमित्यन्ये । **याज्ञवल्क्यः** ( प्रा. २५३-२५६ )—

“ सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम् । सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमाप्नुयात् ॥

“ वालवासा जटी वापि ब्रह्महत्त्याव्रतं चरेत् । पिण्याकं वा कणान्वापि भक्षयेत्तु समान्निशि ॥ १५

“ अज्ञानात्तु सुरां पीत्वा रेतोविण्मूत्रमेव च । पुनःसंस्कारमर्हन्ति त्रयोवर्णा द्विजातयः ॥

“पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् । इहैव सा शुनी गृध्री सूकरी वापि जायते”॥ इति।

**गौतमः** ( २३।१-३ )—“ सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये मृतः शुद्धेदमत्या पाने पयोघृतमुदकम् ” इति । “ ततोऽस्य संस्कारो मूत्रपुरीषरेतसा च प्राशने ” इति च ।

**यत्वङ्गिरोवचनम्**— २०

“ भूमिप्रदानं कुर्यात्तु सुरां पीत्वा द्विजोत्तमः । पुनर्न च पिबेज्जातु संस्कृतः स विशुध्यति”॥ इति तत् गौडीमाध्व्योः सकृत्पानविषयमिति **माधवीये** । **यत्तु बृहस्पतिनोक्तम्**—

“गौडीं माध्वीं सुरां पीत्वा पैष्टीं विप्रः समाचरेत् । तप्तकृच्छ्रं पराकं च चान्द्रायणमनुक्रमात्” ॥ इति तत्सङ्कल्पमात्रविषयम् । प्रायश्चित्ताकरणे दण्डनमुक्तं **हेमाद्रौ**—

“ सुरापं दण्डयेद्राजा मरणं यदि नेच्छति । ब्रह्मसूत्रं शिखां सम्यक् त्रुटित्वा वापयेच्छिरः ॥ २५

“ सुराभाण्डं ललाटे तु तापयित्वाऽङ्कयेत्सुधीः । आनीय मृन्मयं भाण्डं सुरापूरितमादरात् ॥

“ बध्वा कण्ठे खरं यानमारोप्य नगरात्ततः । निस्सार्य ध्वनयन् भृत्यैरटित्वा नगराद्बहिः ।

“प्रतार्य सद्यो निर्वास्य शुद्धिमाप्नोति नान्यथा”॥इति। “प्रोत्सार्य सहसा राजा न दुष्टस्तेन कर्मणा ॥

“ स पापी द्वादशाब्दं तु कपालध्वजवर्जितम् । ब्रह्महत्याव्रतं कृत्वा शुद्धिमाप्नोति नान्यथा ” ॥

**तत्रैव**—“यदि रोगनिवृत्त्यर्थमौषधार्थं सुरां पिबेत् । ३०

“ रोगे[१] तस्मिन्निवृत्ते तु तस्य चान्द्रद्वयं विदुः । उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ” ॥ इति ।

**पराशरः** ( १०-२७ )—

“ पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत् । पातितार्धशरीरस्य निष्कृतिर्न विधीयते ” ॥ इति ।

उक्तादन्येन शुद्धिरित्यर्थः ।

---

१ ग—तस्योपनयनं भूयः ।

प्रायश्चित्तमाह स एव ( १०।२८ )—
" गायत्रीं जपमानस्तु कृच्छ्रं सान्तपनं चरेत्। गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्॥
" एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् "। इति। एतच्च त्रिविधसुरापानविषयम्।
मद्यपाने तु प्रायश्चित्तमाह बृहस्पतिः—
५ " पीत्वा प्रमादतो मद्यमतिकृच्छ्रं चरेद्द्विजः। कारयेत्तस्य संस्कारं शक्त्या विप्रांस्तु भोजयेत् "॥
कामकारे पराशरः ( १२।६७ )—
" मद्यपश्च द्विजः कुर्यान्नदीं गत्वा समुद्रगाम्। चान्द्रायणे ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम्॥
" अनडुत्सहितां गां च दद्याद्विप्रेषु दक्षिणाम् "॥ इति।
पनसादिजन्यमदकरणद्रव्यं मद्यम्। तदाह पुलस्त्यः—" पानसद्राक्षमाधूकखार्जूरं तालमैक्षवम्।
१० " मधूत्थं सैरमारिष्टं मैरेयं नालिकेरजम्। समानानि विजानीयान्मद्यान्यकोदशैव तु "। इति।
द्विजो ब्राह्मणः।
" कामादपि च राजन्यो वैश्यो वाऽपि कथंचन। मद्यमेव सुरां पीत्वा न दोषं प्रतिपद्यते "॥ इति।
बृहद्याज्ञवल्क्यस्मरणात्। मद्यं सुरा गौडी माध्वी च पैष्टी निषिद्धैव। एकादशानामन्यतमपाने
विप्रो महानदीतीरे चान्द्रायणं चरित्वा ब्राह्मणभोजनं कृत्वा दक्षिणां दद्यात्। हेमाद्रौ—
१५ " माधूकं शैलमारिष्टमैरेयं नालिकेरजम्। तालं हिन्तालजं चैव द्राक्षाखर्जूरसंभवम्॥
" वृक्षोद्भवमिदं मद्यं नवधा परिकीर्तितम्। एषामन्यतमं पीत्वा द्विजो गच्छेन्महानदीम्॥
" चान्द्रायणं चरित्वाऽथ कुर्याद्ब्राह्मणभोजनम्। सुरापस्पृष्टमन्नं च सुराभाण्डोदकं तथा॥
" सुरापानसमं प्राहुः तत्र चान्द्रस्य भक्षणम्। तस्योपनयनं भूयो पञ्चगव्यस्य सेवनम्"॥ इति।
मनुः ( ११।९७ )—
२० " यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत्। तस्य व्यपैति तद्ब्रह्म शूद्रत्वं च स गच्छति॥
" अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति। मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः॥
" अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा। पञ्चरात्रं पिबेत्पीत्वा शंखपुष्पीशृतं पयः॥
" स्पृष्ट्वा दत्वा च मदिरां विधिवत् प्रतिगृह्य च। शूद्रोच्छिष्टाश्च पीत्वाऽपः कुशवारि पिबेत्त्र्यहम्॥
" ब्राह्मणस्य सुरापस्य गन्धमाघ्राय सोमपः। प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुध्यति॥
२५ " अज्ञानात्प्राश्य विण्मूत्रसुरासंसृष्टमेव च। पुनस्संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः "॥
देवलः—
" हिन्तालतालखर्जूरनालिकेरमधूद्भवम्। गन्धं वायुवशात्प्राप्तं घ्रात्वा विप्रस्य दक्षिणम्॥
" हस्तमाघ्राय सहसा शुद्धिमाप्नोति तत्क्षणात्। अभावे भास्करं दृष्ट्वा स्पृष्ट्वा कर्णं स्मरेद्धरिम् "॥

**विण्मूत्रादिभक्षणप्रायश्चित्तम्।** पराशरः ( १२।२–३ )—
३० " अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च। पुनस्संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥
" अजिनं मेखला दण्डो भैक्षचर्या व्रतानि च। निवर्तन्ते द्विजातीनां पुनस्संस्कारकर्मणि॥
" विण्मूत्रस्य च शुद्ध्यर्थं प्राजापत्यं समाचरेत्। पञ्चगव्यं प्रकुर्वीत स्नात्वा पीत्वा शुचिर्भवेत् "॥
स्नात्वा पञ्चगव्येन। एतच्च पुनस्संस्कारात्प्रागेव कार्यम्। कामकारे तु स एव ( ११।१ )—
" अमेध्यरेतोगोमांसं चण्डालान्नमथापि वा। यदि भुक्तं तु विप्रेण कृच्छ्रं चान्द्रायणं चरेत् "॥
३५ अमेध्यं विण्मूत्रादि। तथा च मनुः (११।१५४)—"प्राश्य मूत्रपुरीषादि द्विजश्चान्द्रायणं चरेत् "।

---

१ मद्य–सैर।

यत्तु चतुर्विंशतिमतेऽभिहितम्—

" विण्मूत्रभक्षणे विप्रश्चरेच्चान्द्रायणद्वयम्। श्वादीनां चैव विण्मूत्रं चरेच्चान्द्रायणत्रयम् " ॥ इति

तदेतदभ्यासविषयमिति माधवीये ।

यमः—"द्विजोऽज्ञानान्मलं मूत्रं खरमानुषयोः कपेः । मयूरहंसगृध्राणां सकृत् भुक्त्वा तु पातकी ॥

" पुनःकर्म प्रकुर्वीत तप्तकृच्छ्रं विशोधनम्। ५

" रोगिणो न पुनःकर्म कृच्छ्रमात्रमुदीरितम् । सुखी भूत्वा पिबेद्गव्यं नारीणामर्धमीरितम् " ॥ इति ।

चंडालघटस्थजलपाने प्रायश्चित्तम् ।

पराशरः ( ६।२३,२६ )—

" चंडालघटसंस्थं तु यत्तोयं पिबति द्विजः । तत्क्षणात् क्षिपते यस्तु प्राजापत्यं समाचरेत् ॥

" यदि न क्षिप्यते तोयं शरीरे यस्य जीर्यते। प्राजापत्यं न दातव्यं कृच्छ्रं सान्तपनं चरेत्"॥इति। १०

प्रथममज्ञानात्पीत्वा पश्चात्तदानीमेव यदि वमेत् तदा प्राजापत्यम् । तज्जरणे सान्तपनं कृच्छ्रं परिषदा दातव्यम् । न तु प्राजापत्यम् ।

बुद्धिपूर्वं तत्पाने वर्णभेदेन प्रायश्चित्तभेदमाह स एव ( ६।२७ )—

" चरेत्सान्तपनं विप्रः प्राजापत्यमनन्तरः । तदर्धं तु चरेद्वैश्यः पादं शूद्रस्य दापयेत् " ॥ इति ।

रजकाद्यन्त्यजभांडोदकादिपाने प्रायश्चित्तमाह स एव ( ६।२८ )— १५

" भाण्डस्थमन्त्यजानां तु जलं दधि पयः पिबेत् । ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः ॥

" ब्रह्मकूर्चोपवासेन द्विजातीनां तु निष्कृतिः । शूद्रस्य चोपवासेन तथा दानेन शक्तितः "॥ इति ।

ब्रह्मकूर्चस्वरूपमग्रे वक्ष्यते । तत्सहित उपवासः त्रैवर्णिकस्य चतुर्थस्य ब्रह्मकूर्चस्थाने दानं द्रष्टव्यम्।

चण्डालवाप्यादिजलपाने प्रायश्चित्तम् ।

पराशरः ( ६।२३,२४ )— २०

" चण्डालखातवापीषु पीत्वा सलिलमग्रजः । अज्ञानाच्चैकभुक्तेन त्वहोरात्रेण शुध्यति ।

" चण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् । गोमूत्रयावकाहारः त्रिरात्राच्छुद्धिमाप्नुयात्"॥इति।

चण्डालस्वामिकवाप्युदकपाने एकभुक्तं कामकारे तु उपवासः । चण्डालभाण्डसंस्पृष्टकूपस्थजल-पाने गोमूत्रसहितयवपिष्टादिकं दिनत्रयमाहारत्वेन स्वीकुर्यादित्यर्थः ।

उच्छिष्टविषयतदपवादौ । २५

देवलः—

" विप्रस्य पीतशेषं यत्तोयमन्यः पिबेद्यदि । मद्यपानसमं प्रोक्तं तत्तोयं मुनिपुंगवैः ॥

" पीत्वाऽज्ञानात् द्विजः कुर्यात्प्राजापत्यं विशुद्धये " ॥ इति । पृथक्पात्राभावे तु मार्कण्डेयः—

" पात्राभावे तृषार्तस्तु पीतशेषं पिबेत् द्विजः। भूमौ किञ्चिन्निपात्याथ पीत्वा विप्रो न दोषभाक् " ॥ इति।

वृद्धशातातपः— ३०

"पीतशेषं तु यत्किञ्चित् भाजने मुखनिःसृतम्। अभोज्यं तत् विजानीयात् भुक्त्वा चान्द्रायणं चरेत् ॥

" पीतोच्छिष्टं च पानीयं पीत्वा तु ब्राह्मणः क्वचित्। त्रिरात्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनः"॥ इति।

एतत् स्वोच्छिष्टविषयम् । हारीतः—

" स्त्र्युच्छिष्टस्थिता आपो यदि कश्चित्पिबेत् द्विजः । शंखपुष्प्या विपक्वेन त्र्यहं क्षीरेण शुध्यति ॥

" शूद्रोच्छिष्टजलं पीत्वा त्रिरात्रं यावकं पिबेत् " ॥

**निषिद्धक्षीरपानप्रायश्चित्तम्** । स एव—

" मृतवत्सापयः पीत्वा मुखेनापि जलं द्विजः । उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति "॥ इति ।

**चतुर्विंशतिमते**—

" स्त्रीक्षीरं तु द्विजः पीत्वा कथञ्चित्काममोहितः । पुनः संस्कृत्यं चात्मानं प्राजापत्यं समाचरेत्॥

५ " अजोष्ट्रीसंधिनीक्षीरं मृगाणां वनचारिणाम् । अनिर्दशाया गोश्चैव पीत्वा दिनमभोजनम्"॥ इति ।

**अत्रिः**—

"अविकोष्ट्र्याश्च यत्क्षीरं मृगाणां वनचारिणाम् । छागजं गार्दभं क्षीरं भुक्त्वा दिनमभोजनम्"॥ इति

**विष्णुः** ( ५१–३८ )—" गोऽजामहिषीवर्जं सर्वपयांसि प्राश्योपवसेत् " ॥ इति ।

अयं चैकदिनोपवासो ज्ञानकृते सकृत्पाने वेदितव्यः । असकृत्पाने तु **पराशरः** ( ११।१० )—

१० " पीयूषं श्वेतलशुनं वृन्ताकफलगृञ्जनम् । पलाण्डुं वृक्षनिर्यासं देवस्वकवकानि च ॥

" उष्ट्रीक्षीरमविक्षीरमज्ञानाद्भुञ्जते द्विजः । त्रिरात्रमुपवासेन पञ्चगव्येन शुध्यति "॥ इति ।

पीयूषः अभिनवं पयः । पयसोऽभिनवत्वं दशाहान्तःपातित्वम् । कामकृते तु **शंखः**—

" क्षीराणि यान्यपेयानि तद्विकाराशने बुधः । सप्तरात्रं व्रतं कुर्यात्प्रयत्नेन समाहितः " ॥ इति ।

कामतोऽभ्यासे तु—

१५ **शातातपः**—" सन्धिन्या अन्तर्दशाहाया अवत्सायाश्च गोक्षीरप्राशने वृथामांसे प्राजापत्यमुष्ट्रीखरीमानुषीक्षीरप्राशने चान्द्रायणं पुरुषस्य पुनरुपनयनं च " ॥ इति ।

**स्मृतिसारे**—"क्षीरं लवणसम्मिश्रमुच्छिष्टेऽपि च यत् घृतम् । पानं[1] रजकतीर्थेषु ताम्रे गव्यं सुरासमम्"॥

**यमः**—" ताम्रपात्रस्थितं गव्यं नालिकेरोदकं तथा । लवणाक्तं पयश्चैव मद्यगन्धं तथैव च ॥

" पीत्वा द्विजश्चरेच्चान्द्रं प्राजापत्यमकामतः " ॥ इति ।

२० **पराशरः**—

" सकांस्यं नालिकेराम्बु कांस्ये च रसमैक्षवम् । नालिकेररसं पक्वमभूमिष्ठं जलं तथा ॥

" नालिकेरोदकं ताम्रपात्रस्थं गव्यमेव च । लवणाक्तं पयश्चैव मद्यघ्राणं तथैव च ॥

" द्विजः कामाच्चरेच्चान्द्रं पीत्वा ज्ञानात्प्रजापतिम् " ॥

**देवलः**—"ताम्रपात्रस्थितं दुग्धं गोमूत्रं तक्रमेव च । नालिकेरोदकं तत्स्थं पीत्वा चान्द्रायणं चरेत्" ॥

२५ निमित्तान्तरे च भोजनप्रकरणे प्रायश्चित्तमुक्तम् ।

**सुवर्णादिस्तेयप्रायश्चित्तम्** । अथ स्तेयप्रायश्चित्तमुच्यते ।

तत्र स्वर्णस्तेयप्रायश्चित्तमाह **मनुः** ( ११।९९–१०२ )—

" सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु । स्वकर्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति ॥

" गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् । वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव वा ॥

३० " तपसापनुनुत्सुस्तु सुवर्णस्तेयजं मलम् । चीरवासा द्विजोऽरण्ये चरद्ब्रह्महणो व्रतम् ॥

" एतैर्व्रतैरपोहेत तत्पापं स्तेयकृत् द्विजः " ॥ वधपक्षो नामधारकमात्रविप्रविषयः तपःपक्षस्तु वनस्थत्वादिगुणोपेतब्राह्मणविषय इति **माधवीये** ।

अत्र सुवर्णशब्दः परिमाणविशेषोपेतहेमवचनः । तथा च **याज्ञवल्क्यः** (आ. ३६२–३६३ )—

" जालसूर्यमरीचिस्थं त्रसरेणुरजः स्मृतम् । तेऽष्टौ लीक्षा तु तास्तिस्रो राजसर्षप उच्यते ।

---

१ ग–ज्ञानं ।

" गौरस्तु ते त्रयः षट् ते यवमध्यस्तु ते त्रयः । कृष्णलः पञ्च ते माषस्ते सुवर्णं तु षोडश" ॥ इति ।
स्तेयस्वरूपमाह व्यासः—
" समक्षं वा परोक्षं वा बलाच्चौर्येण वा पुनः । परस्वानामुपादानं स्तेयमित्युच्यते बुधैः " ॥
अपहृतं धनं स्वामिने दत्त्वैव स्तेयप्रायश्चित्तं कर्तव्यम्
" स्तेये ब्रह्मस्वभूतस्य सुवर्णादेः कृते पुनः । स्वामिनेऽपहृतं दत्त्वा हत्यानिष्कृतिमाचरेत् " ॥ इति ५
स्मरणात् ।

यदा सुवर्णमपहृत्य तदभुक्त्वा तदानीमेवानुतापेन प्रत्यर्पयेत् तदा आपस्तम्बोक्तं द्रष्टव्यम् ( १।२५।१० )—" चतुर्थकालं मिताशनेन त्रिवर्षमवस्थानम् " इति ।

मनसापहारे तु सुमन्तुराह—" स्वर्णस्तेयी द्वादशरात्रं वायुभक्षः पूतो भवति " ॥ इति ।
याज्ञवल्क्यः (प्रा. २५७—२५८)— १०
" ब्राह्मणः स्वर्णहारी तु राज्ञे मुसलमर्पयेत् । स्वकर्म ख्यापयंस्तेन हतो मुक्तोऽपि वा शुचिः ॥
" अनिवेद्य नृपे शुध्येत् सुरापव्रतमाचरेत् । आत्मतुल्यं सुवर्णं वा दद्याद्विप्राय तुष्टिकृत् " ॥ इति ।
पराशरः ( १२।६९—७० )—
" अपहृत्य सुवर्णं तु ब्राह्मणस्य ततः स्वयम् । गच्छेन्मुसलमादाय राजानं स्वयमेव तु ॥
" ततः शुद्धिमवाप्नोति राज्ञाऽसौ मुक्त एव च । कामतस्तु कृतं यत्स्यान्नान्यथा वधमर्हति " ॥ इति । १५
आपस्तम्बः (१।९।२५।४)—" स्तेनः प्रकीर्णकेशोंऽसे मुसलमादाय राजानं गत्वा कर्माचक्षीत । तेनैनं हन्याद्वधे मोक्षः " ॥ इति ।

हेमाद्रौ—" हत्वा ब्रह्मस्वमज्ञात्वा द्वादशाब्दं तु पूर्ववत् । कपालध्वजहीनं तु ब्रह्महत्याव्रतं चरेत् ॥
" यद्वांऽसे मुसलं धृत्वा विस्रस्यात्मशिरोरुहान् । गत्वा राजानमाचष्टे प्रहृतस्तेनमस्तके ॥
" मृत्वा शुद्धिमवाप्नोति नान्यथा शुद्धिरिष्यते ॥ २०
" गुरूणां यज्ञकर्तॄणां धर्मिष्ठानां तथैव च । श्रोत्रियाणां द्विजानां तु हृत्वा हेम कथं भवेत् ॥
" तच्छुध्यर्थं स्वदेहे तु संपूर्णं लेपयेत् घृतम् । कारीषाच्छादितो दग्धः स्तेयपापात्प्रमुच्यते " ॥
अल्पस्वर्णापहरणे प्रायश्चित्तमाह गौतमः—
" त्रसरेणुसमं हेम हृत्वा कुर्यात्समाहितः । प्राणायामद्वयं सम्यक् तेन शुध्येन्न संशयः ॥
" प्राणायामत्रयं कृत्वा हृत्वा लीक्षाप्रमाणकम् । प्राणायामाश्च चत्वारो राजसर्षपमात्रतः ॥ २५
" गौरसर्षपमात्रं तु हृत्वा हेम विचक्षणैः । स्नात्वा च विधिवत्कार्यं गायत्र्यष्टसहस्रकम् ॥
" यवमध्यसुवर्णस्य स्तेये शुद्धो जपेद्द्विजः । आ सायं प्रातरारभ्य गायत्रीं वेदमातरम् ॥
" हेम्नः कृष्णलमात्रस्य हृत्वा सान्तपनं चरेत् । माषमात्रसुवर्णस्य प्रायश्चित्तं तु कथ्यते ॥
" गोमूत्रपक्वयवभुक् देवार्चनपरायणः । मासत्रयेण शुद्धिः स्यान्नारायणपरायणः ॥
" रूप्यमात्रसुवर्णस्य स्तेयं कृत्वा प्रमादतः । जपेद्वै लक्षगायत्रीमन्यथा दोषमाप्नुयात् ॥ ३०
" निष्कमात्रस्य हेम्नस्तु हरणे विप्रसत्तमः । ब्रह्महत्याव्रतं कृत्वा षडब्दं शुद्धिमाप्नुयात् ॥
" किञ्चिन्न्यूनसुवर्णस्य स्तेये तु द्विजसत्तमः । गोमूत्रपक्वयवभुगब्देनैकेन शुध्यति ।
" संपूर्णस्य सुवर्णस्य स्तेयं कृत्वा मुनीश्वरैः । ब्रह्महत्याव्रतं कुर्याद्द्वादशाब्दान्समाहितः " ॥

१ ग—पञ्चाग्नि । २ ग—धंधार्थ । ३ ग—न । ४ कग—द्व । ५ ग—लि । ६ ग—मात्र । ७ ग—रा ।

अज्ञानादपहृतस्य सुवर्णस्य पुनर्दाने तु प्रायश्चित्तं स एवाह—
" ब्रह्मस्वं यस्तु हृत्वा च पश्चात्तापमवाप्य च । पुनर्दत्वा तु विप्रेभ्यः प्रायश्चित्तमिदं चरेत् ॥
" कृच्छ्रं सान्तपनं कृत्वा द्वादशाहोपवासतः । शुद्धिमाप्नोति विप्रेन्द्र अन्यथा पतितो भवेत् " ॥ इति ।

**क्षत्रियादीनां स्तेयप्रायश्चित्तम्** । राज्ञां स्तेयप्रकारोऽभिहितः **शिवरहस्ये**—
५ " अन्यायाद्विप्रग्रामेषु अनाथेभ्यो धनं च यत् । अदण्ड्येभ्योऽपि यद्वित्तं स्तेयं तद्भूभुजामिह ॥
" स्तेयं कृत्वा सुरां पीत्वा मृत्वा राजा विशुध्यति " । **नागरखण्डे**—
"ऊरुजस्तु सुरां पीत्वा हृत्वा स्वर्णं द्विजन्मनाम् । राजा च शुद्धिमाप्नोति यच्छेद्वा ह्ययुतं गवाम् ।
"पादजस्तु सुरां पीत्वा हृत्वा हेम द्विजन्मनाम् । राज्ञा दण्ड्यः स्वधर्मेण मुसलेन हतः शुचिः" ॥ इति ।
**कात्यायनः**—
१० " विप्रादीनां तु नारीणां स्तेयं वा पानमेव वा । संभवेद्यदि दैवेन नेच्छन्ति मरणं बुधाः ॥
" त्याज्या एव स्त्रियस्ताश्च न पोष्या धर्मलिप्सुभिः " ॥ इति ।

**रजतस्तेयप्रायश्चित्तम्** । रजतस्तेये **नारदः**—
" सुवर्णमानं यस्मिन्वै रजतं स्तेयकर्मणि । कुर्यात्सान्तपनं सम्यगन्यथा पतितो भवेत् ॥
" दशनिष्कान्तपर्यन्तमूर्ध्वनिष्कचतुष्टयात् । हृत्वा तु रजतं विद्वान् कुर्याच्चान्द्रायणं द्विजः ॥
१५ " ततो विंशतिनिष्कान्तं रजतस्तेयकर्मणि । चान्द्रायणद्वयं प्रोक्तं तत्पापं परिशोधनम् ॥
" शतादूर्ध्वं सहस्रान्तं प्रोक्तं चान्द्रायणद्वयम् । सहस्रादधिकस्तेये ब्रह्महत्याव्रतं चरेत् " ॥

**ताम्रस्तेये प्रायश्चित्तम्** । ताम्रस्तेये **हैमाद्रौ**—
" पलद्वये पञ्चगव्यं पीत्वा शुद्धिमवाप्नुयात् । प्राजापत्यं पञ्चपले तप्तं दशपले स्मृतम् ।
" विंशत्पले तु चान्द्रं स्यात्स्यात्पञ्चाशति तु त्रयम् । ताम्रे षष्टिपले प्रोक्तं मासं कृत्वाऽघमर्षणम् ॥
२० " कण्ठदघ्नजले स्थित्वा शुद्धिमाप्नोति पूर्वजः । ताम्रेऽशीतिपले तत्र स्तेयं कृत्वा तु पूर्वजः ॥
" भूपरिक्रमणं कृत्वा भूयश्चान्द्रं ततः परम् । हृत्वा शतपलं ताम्रं स्वर्णस्तेयसमं विदुः " ॥ इति ।
स्वर्णचतुष्टयपरिमितं पलम्
"पलं सुवर्णं चत्वारि तच्चत्वारि ध्रुवो भवेत् । चत्वारिंशद्ध्रुवाणां च भार इत्युच्यते बुधैः" ॥ इति **स्मृतेः** ।

**कांस्यादिस्तेये प्रायश्चित्तम्** । **चतुर्विंशतिमते**—
२५ " कांस्यपित्तलमुख्येष्वयस्कान्तेषु पञ्चसु । सहस्रनिष्कमानं तु पारक्यं परिकीर्तितम् ॥
" प्रायश्चित्तं तु लोहानां स्तेये रजतवत्स्मृतम् " ॥ इति ।

**धनधान्यादिस्तेयप्रायश्चित्तम्** । **मनुः** ( ११।१६२–१६९ )—
" धान्यान्नधनचौर्याणि कृत्वा कामाद् द्विजोत्तमः । स्वजातीयगृहादेव कृच्छ्राब्देनैव शुध्यति ॥
" मनुष्याणां तु हरणे स्त्रीणां क्षेत्रगृहस्य च । कूपवापीजलानां च शुद्धिश्चान्द्रायणं स्मृतम् ॥
३० " द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मनः । चरेत्सान्तपनं कृच्छ्रं निर्यात्यात्मविशुद्धये ॥
" भक्ष्यभोज्यापहरणे यानशय्यासनस्य च । पुष्पमूलफलानां च पञ्चगव्यं विशोधनम् ॥
" तृणकाष्ठद्रुमाणां च शुष्कान्नस्य गुडस्य च । चेलचर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ॥
" मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च । अयःकांस्योपलानां च द्वादशाहं कणान्नता ॥
" कार्पासकीटजीर्णानां द्विशफैकशफस्य च । पक्षिगन्धौषधीनां च रज्ज्वाश्च त्र्यहः पयः ॥
३५ " एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः " ॥

---

१ क्ष- द्विशतं । २ क-कान्तो ।

**भूम्यपहारप्रायश्चित्तम्** । भूम्यपहारे दोषाधिक्यमाह **पराशरः** ( ७५ )—
" वापिकूपतटाकाद्यैर्वाजपेयशतैरपि । गवां कोटिप्रदानेन भूमिहर्ता विशुध्यति " ॥
**नारदः**—" केदारे तप्तकृच्छ्रं स्याद्गृहादेश्चान्द्रमीरितम् " ॥ इति ।
राजदण्डमाहापस्तम्बः (२।१०।२७।१६-१७)"अयमस्य दण्डः। पुरुषवधे स्तेये भूम्यादान इति ।
चक्षुर्निरोधस्त्वेतेषु ब्राह्मणस्य " इति । भूम्यादानं भूम्यपहारः । पुरुषवधादिषु शूद्रो वध्यः । ५
ब्राह्मणस्य तु पट्टबन्धादिना चक्षुषी निरोद्धव्ये न तत्पाटयितव्ये 'न शारीरो ब्राह्मणे दण्ड' इति
'अक्षतो ब्राह्मणो व्रजेत्' इत्यादिस्मरणात् । **वस्त्रादिस्तेयप्रायश्चित्तम्** । **देवस्वामी**—
" स्थूलतन्तुकृते वस्त्रे स्तेयं कृत्वा तु पूर्वजः । पश्चात्तापसमायुक्तः प्राजापत्यं समाचरेत् ॥
" सूक्ष्मतन्तुकृते वस्त्रे पराकं मुनिचोदितम् । पीतवस्त्रं मुषित्वा तु तप्तकृच्छ्रद्वयं चरेत् ॥
" नीलमये सूक्ष्मवस्त्रे चरेच्चान्द्रायणत्रयम् । १०
" मूल्याधिके पट्टवस्त्रे कौशेये च मुनीश्वराः । सद्यः पतति पापात्मा घृताक्तोऽग्निं विशेत्तदा " ॥

**अजादिहरणे प्रायश्चित्तम्** । **जाबालिः**—
" अजं बस्तं गृहेऽरण्ये पारक्यं गर्वितो द्विजः । मुषित्वा निष्कृतिं तत्र प्राजापत्यं समाचरेत् " ॥
**मार्कण्डेयः**—
" मार्जारं नकुलं सर्पं भारद्वाजं कपिं तथा । कृच्छ्रार्धमाचरेद्धृत्वा ज्ञात्वा तद्विगुणं चरेत् ॥ १५
" द्विजानां तल्पहरणे प्रायश्चित्तं प्रजापतिः । प्राह चान्द्रं पराकं च तप्तं चैव यथाक्रमम्" ॥ इति ।
**मरीचिः**—
" यो विप्रः पापमज्ञात्वा उपानत्पादुके हरेत् । स तु देहविशुध्यर्थं प्राजापत्यं समाचरेत् ॥
" छत्रं हरेद्विजो यस्तु महातपनिवारणम् । वस्त्रावृते पराकं स्यात्केतकीपर्णसंवृते ॥
" यावकं तालपत्रैश्च निर्मितं राजवल्लभे । पञ्चगव्यं पिबेत्पश्चात्सर्वपापविनाशनम् ॥ २०
" पुष्पजालं हि पारक्यं देवपूजार्थमादरात् । सुगन्धिकरवीरादि हृत्वा विप्रः स पापभाक् ॥
" देवार्थं पुष्पहरणे चान्द्रं वत्सरसेवनात् । पराकं ब्रह्मनिर्माणे कार्यं क्षत्रियवैश्ययोः " ॥ इति ।
**देवलः**—
" कदलीमातुलुङ्गं च नालिकेरं च पानसम् । द्राक्षाखर्जूरजम्बीरचूतजम्बूफलानि च ॥
" फलानि विविधानीह देवप्रियकराणि वै । हृत्वा विप्रस्तु पारक्यं प्रायश्चित्तमिदं चरेत् ॥ २५
" ऋतुत्रये पराकं स्याद्वत्सरे चान्द्रमुच्यते " ॥ इति ।
**गृहोपकरणहरणे** प्रायश्चित्तमाह **गौतमः**—" मुसलं दृषदं चैव ह्युलूखलमनन्तरम् ।
" वेणुपात्रं तथा शूर्पं मृन्मयं भाण्डमेव च । गृहोपकरणं हृत्वा पुनः संस्कारमर्हति " ॥ इति ।

**सालग्रामादेः पूजोपकरणस्य च हरणे प्रायश्चित्तम्** । **देवलः**—
" सालग्रामं शैवलिङ्गं प्रतिमां चक्रपाणिनः । घण्टामुपस्करं विप्रो यो हरेत्पापबुद्धिमान् ॥ ३०
" सालग्रामे तु चान्द्रं स्याच्छिवलिङ्गे तथैव च । प्राजापत्यं चक्रपाणेरितरेषु तथैव च ॥
" शतादूर्ध्वं तु रुद्राक्षं हृत्वा चान्द्रत्रयं स्मृतम् । शते पराकमल्पे तु गायत्रीजपमाचरेत् " ॥
**नारदः**—" लेखनीं बन्धसूत्रं च पुस्तकं फलकं तथा ।
" हृत्वा दत्वा तु तद्द्रव्यं पश्चात्तापसमन्वितः । प्राजापत्यं चरेत्कृच्छ्रं तदा देहविशुद्धये " ॥

**माध्यस्थ्येन धनग्रहणे प्रायश्चित्तम्** । ३५
**देवलः**—"व्यवहारादिकलहे प्रायश्चित्तादिकर्मसु । धनं गृहीत्वा यो विप्रः कौटसाक्ष्यं वदेत चेत् ॥
" तस्य पुत्राश्च पौत्राश्च तदा नाशमवाप्नुयुः । तस्य देहविशुद्ध्यर्थं महाचान्द्रमुदीरितम् " ॥ इति ।

---

१ ग–क ।

मनुः—"द्विजवादे महाचान्द्रं धर्मशास्त्रे तदर्धतः । इतरेषु विवादेषु कायकृच्छ्रं समाचरेत्" ॥ इति ।
देवलः—" ग्रामणीः प्राड्विवाकश्च राजद्वारे पुरोहितः ।
"प्रजाभ्यः कार्यसिद्ध्यर्थं यो हरेत्तस्य निष्कृतिः । एकवारे तु चान्द्रं स्यान्महाचान्द्रं द्विवारतः"॥इति ।
मनुः ( ८।३४० )—
५ " वानस्पत्यं फलं मूलं दार्वग्न्यर्थं तृणानि च । तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत् ॥
" चणकव्रीहिगोधूमयवानां मुद्गमाषयोः । अनिषिद्धो ग्रहीतव्यो मुष्टिरेकोऽध्वनिस्थितैः " ॥ इति ।
आपस्तम्बः ( १।१०।२८।१-५ )—" यथाकथा च परपरिग्रहमभिमन्यते स्तेनोह भवतीति कौत्सहारीतौ तथा कण्वपौष्करसादी । सन्त्यपवादाः परिग्रहेष्विति वार्ष्यायणिः । शम्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्त्यभिव्यपहारो भवति । सर्वत्रानुमतिपूर्वमिति हारीतः " इति ।
१० शम्योषाः कोशधान्यानि माषमुद्गादयः । ध्वनिस्थितैः गौतमः ( १२।२५ )—
" गोग्न्यर्थे तृणमेधान्वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि चापरिवृतानाम् " ॥ इति ।
मनुः ( ८।३४२ )—
" द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके । आददानः परक्षेत्रान्न हस्तच्छेदमर्हति " ॥ इति ।
अत्र द्विज इति विशेषणाच्छूद्रस्तु दण्ड्य एव । तथा च स्मृत्यन्तरेऽपि—
१५ "तृणं वा यदि वा काष्ठं मूलं वा यदि वा फलम् । अनापृष्ट्वस्तु गृह्णानो हस्तच्छेदनमर्हति"॥ इति ।

## अथागम्यागमनप्रायश्चित्तम् । गुरुतल्पगमने प्रायश्चित्तम् ।

गुरुतल्पगमनस्य प्रायश्चित्तमाह मनुः ( ११।१०३-१०७ )—
" गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये[१] । सूर्मीं ज्वलन्तीमाश्लिष्य मृत्युना स विशुध्यति ॥
" स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ । नैऋतीं दिशमातिष्ठेदा निपातादजिह्मगः ॥
२० " खट्वाङ्गी चीरवासा वा श्मश्रुलो निर्जने वने । प्राजापत्यं चरेत् कृच्छ्रमब्दमेकं समाहितः ॥
" चान्द्रायणं वा त्रीन्मासानभ्यस्येन्नियतेन्द्रियः । हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये ॥
" एतैर्व्रतैरपोहेयुर्महापातकिनो मलम्[३] " ॥ इति । याज्ञवल्क्यः ( प्रा. २५९–२६० )—
" तप्तेऽयःशयने सार्धमायस्या योषिता स्वपेत् । गृहीत्वोत्कृत्य वृषणौ नैऋत्यां वोत्सृजेत्तनुम् ॥
" प्राजापत्यं चरेत्कृच्छ्रं समा वा गुरुतल्पगः । चान्द्रायणं वा त्रीन्मासानभ्यसेद्वेदसंहिताम्" ॥ इति ।
२५ पराशरः ( १०।१०-११ )—
" मातरं यदि गच्छेत्तु भगिनीं स्वसुतां तथा । एतास्तु मोहितो गत्वा त्रीणि कृच्छ्राणि सञ्चरेत् ।
"चान्द्रायणत्रयं कुर्यात् शिश्नच्छेदेन शुध्यति " ॥ एतद्व्याख्यातं माधवीये—मातरं जननीं भगिनीमेकोदराम् । अत्र त्रीणि प्रायश्चित्तानि । प्राजापत्यत्रयमेकं चान्द्रायणत्रयं द्वितीयं शिश्नच्छेदस्तृतीयम् । तच्च त्रयं मैथुनप्रकारभेदविषयतया योजनीयम् । मैथुनं चाष्टविधम्—
३० " स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
" एतन्मैथुनमष्टाङ्गं प्रवदन्ति[५] मनीषिणः " ॥ इति स्मरणात् । तत्र आद्यं व्रतमल्पत्वादप्रवर्तकस्मरणादिपञ्चविधापराधविषयम् । द्वितीयं तु सङ्कल्पाध्यवसायविषयम् । तृतीयं त्वतिमहत्वात् क्रियानिर्वृत्तिविषयम् इति । रेतस्सेकात्पूर्वं तु निवृत्तौ ब्रह्महत्याव्रतं कार्यम्
" रेतःसेकात्पूर्वमेव निवृत्तो यदि मातरम् । ब्रह्महत्याव्रतं कुर्यात् कपालध्वजवर्जितम् ॥

१ ग—निर्जितः । २ ग—मैहो । ३ क—ति । ४ क—यसो । ५ क्ष—वदन्ति ब्रह्मचारिणः ।

"रेतस्सेकान्तनिर्वृत्तौ मुष्कच्छेदनमर्हति"। इति स्मृतेः। **वसिष्ठः** (अ. २० सू. १३)—
"सवृषणं शिश्नमुत्कृत्याञ्जलावाधाय दक्षिणामुखो गच्छेत् यत्रैव प्रतिहतस्तत्रैव तिष्ठेदाप्रलयात्" इति।
**आपस्तम्बः** (१।९।२५।१)—"गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलावाधाय दक्षिणां दिशमनावृत्तिं व्रजेत् ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात्" इति। अत्र **हरदत्तः**—गुरुरत्र पिता नाचार्यादिः। तल्पशब्देन शयनवाचिना भार्या लक्ष्यते। सा च साक्षाज्जननी। न तत्सपत्नी। ५
तां गत्वा साण्डं शिश्नं क्षुरादिना छित्वाऽञ्जलावाधाय दक्षिणां दिशमनावर्तमानो गच्छेत्। आयसी ताम्रमयी वाऽन्तस्सुषिरा स्त्रीप्रतिकृतिसूर्मिः। तामग्नौ तप्तां परिष्वज्य समाप्नुयात् म्रियेत वा।
**संवर्तः**—

"पितृदारान् समारुह्य मातृवर्जं नराधमः। भगिनीं मातुराप्तां वा स्वसारं वाऽन्यमातृजाम्॥
"एतां गत्वा स्त्रियो मोहात् तप्तकृच्छ्रं समाचरेत्" इति। **पराशरः** (१०।१३-१४)— १०
"पितृदारान् समारुह्य मातुराप्तां च भ्रातृजाम्। गुरुपत्नीं स्नुषां चैव भ्रातृभार्यां तथैव च॥
"मातुलानीं सगोत्रां च प्राजापत्यत्रयं चरेत्। गोद्वयं दक्षिणां दत्वा शुध्यते नात्र संशयः"॥ इति।
**माधवीये** व्याख्यातमेतत्—मातुराप्ता मातुः सखी। भ्रातृजा ज्येष्ठस्य कनिष्ठस्य वा सुता। गुरवः आचार्यविद्यादातृज्येष्ठभ्रातृऋत्विजः। अभयदाताऽन्नदाता च। अकामतः सकृत् गमने इदं प्रायश्चित्तमिति। अकामकृतगमने रेतस्सेकात् प्राङ्निवृत्तौ तु **शंखः**— १५
"चण्डालीं पुल्कसीं म्लेच्छीं स्नुषां च भगिनीं सखीम्। मातापित्रोः स्वसारं च निक्षिप्तां शरणागताम्॥
"मातुलानीं प्रव्रजितां सगोत्रां नृपयोषितम्। शिष्यभार्यां गुरोर्भार्यां गत्वा चान्द्रायणं चरेत्"॥ इति।
कामकृतगमने रेतःसेकान्तनिर्वृत्तौ **नारदः** (१२।७३-७५)—
"माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा॥
"दुहिताचार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या॥ २०
"आसामन्यतमां गत्वा गुरुतल्पग उच्यते। शिश्नस्योत्कर्तनं तत्र नान्यो दण्डो विधीयते"॥ इति।
**पराशरोऽपि**—

"मातृष्वसृगमेऽप्येवमात्ममेढ्रनिकृन्तनम्। अज्ञानेन तु यो गच्छेत् चरेच्चान्द्रायणद्वयम्॥

"दश गोमिथुनं दद्याच्छुद्धिं पाराशरोऽब्रवीत्"। इति। अत्र मातृष्वसृग्रहणं श्वश्र्वादेरुपलक्षणम्। कलौ मरणान्तप्रायश्चित्तस्य निषेधात्। "खट्वाङ्गी चीरवासा वा" इति (११।१०५) २५
मन्वाद्युक्तं प्रायश्चित्तान्तरं कर्तव्यम्।

**सवर्णागमने प्रायश्चित्तम्।** सवर्णागमने प्रायश्चित्तमाह **आपस्तम्बः** (२।१०।२७।११-१३)—
"सवर्णायामन्यपूर्वायां सकृत्सन्निपाते पादः पततीत्युपदिशन्त्येवमभ्यासे पादः पादश्चतुर्थे सर्वमिति"॥
अत्र **हरदत्तः**—अन्यः पूर्वः पतिर्यस्याः सा अन्यपूर्वा परभार्या। तस्यां सवर्णायां सकृदभिगमने पादः पतति। पतितस्य द्वादशवार्षिकं प्रायश्चित्तम्। तस्य तुरीयोंऽशस्त्रीणि वर्षाणि। एतच्च ३०
श्रोत्रियभार्यायां ऋतुकाले कामतः प्रथमवृषकस्य ब्राह्मणस्य। एवमभ्यासे प्रत्यभ्यासं पादः पादः पतति। अतश्चतुर्थे सन्निपाते सर्वमेव पतति। ततश्च पूर्णं द्वादशवार्षिकं कर्तव्यम्। तृतीये नववर्षाणि द्वितीये षडिति"। **संवर्तः**—
"ब्राह्मणो ब्राह्मणीं गत्वा प्राजापत्यं समाचरेत्। एवं शुद्धिः समाख्याता संवर्तवचनं यथा"॥ इति।

व्याघ्रः—"ब्राह्मणो ब्राह्मणीं गच्छेदकामां यदि कामतः । कृच्छ्रं चान्द्रायणं कुर्यादर्धमेव प्रमादतः ॥
"अर्धकृच्छ्रं सकामायां तप्तकृच्छ्रं सकृद्व्रतौ । अर्धमर्धं नृपादीनां दारेषु ब्राह्मणश्चरेत् ॥
"एतद्व्रतं चरेत्सार्धं श्रोत्रियस्य परिग्रहे । अश्रोत्रियश्चेद्द्विगुणमगुप्तामर्धमेव च" ॥
क्षेत्रिणः प्रायश्चित्तविशेषानादेशात्सामान्यप्रायश्चित्तं द्रष्टव्यम् । तच्च याज्ञवल्क्येन दर्शितम्
५ (प्रा. ३०६)—
"प्राणायामशतं कुर्यात्सर्वपापापनुत्तये । उपपातकजातानामनादिष्टस्य चैव हि" ॥ इति ।

**संबन्ध्यादिस्त्रीगमने प्रायश्चित्तम् ।**

**चतुर्विंशतिमते**—"संबन्धिनः स्त्रियं गत्वा सपादं कृच्छ्रमाचरेत् ॥
"विधवागमने कृच्छ्रमहोरात्रसमन्वितम् । व्रतस्थागमने कृच्छ्रं सपादं तु समाचरेत् ॥
१० "सखिभार्यां समारुह्य ज्ञातिस्वजनयोषितः । स कृत्वा प्राकृतं कृच्छ्रं पादं कुर्यात्ततः पुनः ।
"कुमारीगमने विप्रश्चरेच्चान्द्रायणं व्रतम् । पतितां तु द्विजो गत्वा तदेव व्रतमाचरेत्" ॥

**स्वैरिणीगमने प्रायश्चित्तम् ।** स्वैरिणीगमने **शंखलिखितौ**—"स्वैरिण्यां वृषल्यामवकीर्णः सचेलः स्नात उदकुंभं दद्यात् । ब्राह्मणाय वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयेत् । क्षत्रियायां त्रिरात्रोषितो यवाढकं दद्यात् । ब्राह्मण्यां त्र्यहमुपोष्य घृतपात्रं दद्यादिति" ।
१५ वर्धकीगमने **षड्त्रिंशे** प्रायश्चित्तमुक्तम्—
"ब्राह्मणीं वार्धकीं गत्वा किञ्चिद्दद्यात् द्विजातये । राजन्यां तु धनुर्दद्यात् वैश्यां गत्वा तु चेलकम् ।
"शूद्रां गत्वा तु वै विप्र उदकुंभं द्विजातये । दिवसोपोषितो वा स्यात् दद्याद्विप्राय भोजनम्" ॥ इति ।
तल्लक्षणं **स्मृत्यन्तरे**ऽभिहितम्—"चतुर्थे स्वैरिणी प्रोक्ता पञ्चमे वर्धकी भवेत्" ॥ इति । इदं च गर्भानुत्पत्तिविषयम् । तदुत्पत्तौ तु **उशनाः**—"गमने तु व्रतं यत्स्यात् गर्भे तद्द्विगुणं चरेत्" ।

२० **गर्भोत्पादने प्रायश्चित्तम् ।** जातिभेदेन गर्भाधाने **चतुर्विंशतिमते**ऽभिहितम्—
"ब्राह्मणीगमने कृच्छ्रं गर्भे सान्तपनं स्मृतम् । राज्ञीगर्भे पराकं स्याद्विड्गर्भे तु त्र्यहाधिकम् ॥
"शूद्रागर्भे द्विजः कुर्यात्तिद्वच्चान्द्रायणव्रतम् । चण्डाल्यां गर्भमारोप्य गुरुतल्पव्रतं चरेत्" ॥ इति ।

**चण्डाल्यादिगमने प्रायश्चित्तम् ।** चण्डालीगमने **पराशरः** (५।१०)—
"*चण्डालीं वा श्वपाकीं वाऽप्यनुगच्छति यो द्विजः* । त्रिरात्रमुपवासित्वा विप्राणामनुशासनात् ॥
२५ "सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरेत् । गोद्वयं दक्षिणां दद्याच्छुद्धिं पाराशरोऽब्रवीत्" ॥ इति ।
ब्राह्मण्यां शूद्राज्जाता चण्डाली । आरूढपतिताज्जाता सगोत्राज्जाता च । एतत्त्रिविधचण्डालसन्ततौ जाता स्त्री चण्डाली । उग्रात् क्षत्तायां जाता श्वपाकी । द्विजो ब्राह्मणः । **यमः**—
"चण्डालपुल्कसानां तु गत्वा भुक्त्वा च योषितम् । कृच्छ्राब्दमाचरेत् ज्ञानादज्ञानादैन्दवद्वयम्" ॥
एतदभ्यासविषयम् । **नारदः**—
३० "चण्डालीं तु द्विजः पूर्वमज्ञात्वा कामपीडितः । पश्चात् ज्ञात्वा तु चण्डालीं शुद्धिमिच्छन्मनस्यथ ॥
"रामसेतुमुपागम्य चापाग्रे प्रत्यहं शुचिः । प्रातः स्नात्वा मासमात्रं पूर्ववच्छुद्धिमाप्नुयात्" ॥ इति ।
**गौतमः**—"द्विजः कामातुरो गच्छन्नविचार्य च सङ्गमम् ॥
"पश्चाच्चाण्डालजातीयां ज्ञात्वा शुद्धिं परायणः । रामेश्वरधनुष्कोट्यां प्रातः स्नात्वा विशुध्यति" ॥

---

१ ग—मेव । २ क्ष—कुर्यात् । ३ मव—क्षत्तुरुमायां ।

**यमः—**
" रेतः सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च । सपिण्डापत्यदारेषु प्राणत्यागो विधीयते" ॥ इति।
एतत्संवत्सराभ्यासविषयम् । **जाबालिः—**
" चण्डालीं रूपसंपन्नां दृष्ट्वा विप्रोऽसकृद् व्रजन् । स चण्डालसमो ज्ञेयः कारीषवधमर्हति ॥
" चापाग्रे मासमात्रं तु प्रातःस्नानाद्विशुध्यति । तद्गर्भधारणे विप्रो मुष्कच्छेदनमर्हति " ॥ इति । ५
**देवलः—**
" चण्डालश्च तुलुष्कश्च द्वावेतौ तुल्यपापिनौ । तदङ्गना तथा ज्ञेया विप्रैः पापभयातुरैः ॥
"ज्ञात्वाऽज्ञात्वा तुलुष्कीं यो द्विजः कामातुरः सकृत् । गत्वा शुद्धिमवाप्नोति चण्डालीगमने यथा"॥इति।
**संवर्तः—**
" पुल्कसीगमनं कृत्वा कामतोऽकामतोऽपि वा । कृच्छ्रं चान्द्रायणं कुर्यात्ततो मुच्येत किल्बिषात् ॥ १०
" नटीं शैलूषकीं चैव रजकीं बुरुडीं तथा । एतासु गमनं कृत्वा चरेच्चान्द्रायणद्वयम् " ॥
चान्द्रायणद्वयमभ्यासविषयं बलात्कारविषयं च । तथा **जाबालिः—**
" द्विजः कामातुरो ग्रामचण्डालीं रजकाह्वयाम् । अज्ञानाद्रमयेत्पापी प्रायश्चित्तं समाचरेत् ॥
" उभयोरैकमत्यं चेत्तत्र चान्द्रं विदुर्बुधाः । बलात्कारेण द्वैगुण्यमभ्यासे च तथा स्मृतम् "॥ इति ।
" रेतःसेकात्पूर्वमेव प्राजापत्यं विशोधनम् । नटिनीं च द्विजो गच्छन् चरेच्चान्द्रायणव्रतम् ॥ १५
" तां गत्वाऽनेकवारं तु चरेच्चान्द्रायणद्वयम् । केशसंवपनं कृत्वा पुनःसंस्कारमर्हति ॥
" वर्षादूर्ध्वं तु पतितः स्यादेवात्र न संशयः " ॥ नटिनीस्वरूपमुक्तं **हेमाद्रौ—**
" देवालये राजगृहे गृहीत्वा भृतिमादरात् । मासि मासि च वर्षे वा प्रत्यहं वाऽथ नृत्यति ॥
"सोऽयं नट इति ख्यातः सर्वधर्मबहिष्कृतः । तस्य संबन्धिनी नारी नटिनीति स्मृता जनैः" ॥ इति ।
**स्मृत्यन्तरे—** २०
" अपि वा मातरं गच्छेन्न गच्छेद्देवदारिकाम् । तां गत्वा तु सकृन्मोहाद्द्विजश्चान्द्रायणं चरेत् " ॥
**नागरखण्डे—**
" ये वै कटकुटीरस्था भाषावर्णविभेदिनः । मद्यमांसं निषेवन्ते बुरुडास्ते समीरिताः ॥
" तदङ्गनेयं बुरुडी सर्वपापालया सदा । एकवारं द्विवारं वा दिनत्रयमथापि वा ॥
" तां गत्वा मासमात्रं वा वत्सरं वा विशेषतः । यावकं तप्तकृच्छ्रं च प्राजापत्यं तथैन्दवम् ॥ २५
" वत्सरे पतितो भूयाद्गर्भे तद्वर्णवान् भवेत् " ॥ इति ।

**षोडशविधग्रामचण्डालीगमने प्रायश्चित्तम् । पराशरः—**
" रजकश्चर्मकारश्च नटो बुरुड एव च । कैवर्तमेदभिल्लाश्च स्वर्णकारश्च सौचिकः ॥
" तक्षकस्तिलयन्त्री च सूनश्चक्री तथा ध्वजी । नापितः कारुकश्चैवं षोडशैते जघन्यजाः ॥
" तत्स्त्रियो ग्रामचण्डाल्यो विप्रैर्वर्ज्याः प्रयत्नतः " ॥ इति । ३०

तत्र चर्मकारस्त्रीगमने **देवस्वामी—**
" चर्मकारस्त्रियं गत्वा पराकं दिनमात्रतः । दिनत्रये तु चान्द्रं स्यात् षण्मासात् त्रिंशदाचरेत् ॥
" वत्सरे पतितं विद्यात्कुर्यात्पातितवत्तदा । गर्भे तु निष्कृतिर्नास्ति कारीषदहनादृते " ॥
**मार्कण्डेयः—**
" कैवर्तस्य स्त्रियं गत्वा बुरुडीगमनोदितम् । प्रायश्चित्तं द्विजः कुर्यात्पुनःसंस्कारमर्हति ॥ ३५

१ ग—नु ।

"मेदस्त्रीगमनेऽप्येवं प्रायश्चित्तं समाचरेत्"। मेदः वेणुकारः।

**नागरखण्डे**—

"चण्डालवत्पशून् निघ्नन् प्रत्यहं भावभेदनः। स भिल्ल इति विख्यातः सर्ववर्णबहिष्कृतः॥

"भिल्लस्त्रियं द्विजो गत्वा चण्डालीगन्तृवच्चरेत्।

५ "स्वर्णकारस्त्रियं गच्छेत् यो विप्रः काममोहितः। एकवारं द्विवारं वा त्रिवारं मासमेव वा॥

"यावकं च पराकं च प्राजापत्यं तथैन्दवम्। यथाक्रमं योजनीयं देहशुद्ध्यर्थमादरात्॥

"तस्योपनयनं भूयो वर्षान्ते पतितो भवेत्"॥ इति। **नारदः**—

"सौचिको वस्त्रसन्धानी यदि तस्य स्त्रियं रमेत्। दिनं दिनत्रयं मासं वर्षं वा गर्भधारणात्॥

"यावकं च पराकं च तप्तमैन्दवमेव च। यथाक्रमं प्रकुर्वीत पतितो गर्भधारणे"॥ इति।

१० **जाबालिः**—"तक्षा च तिलयन्त्री च ग्रामचण्डालसंज्ञिकौ॥

"तयोर्यदि रमेन्नारीं ब्राह्मणः कामपीडितः। रामचन्द्रधनुष्कोट्यां स्नानान्मासेन शुद्ध्यति"॥

**मार्कण्डेयः**—

"सौचिकस्य स्त्रियं गत्वा प्राजापत्यं समाचरेत्। मासत्रये तु चान्द्रं स्यात्तदूर्ध्वं पतितो भवेत्॥

"कुलालस्य स्त्रियं गच्छेद्विजो यः काममोहितः। तस्यैषा निष्कृतिर्दृष्टा पूर्ववन्मुनिसत्तमैः॥

१५ "मद्यविक्रयिणो नारीं यो द्विजः कामपीडितः। तस्योपनयनं भूयः प्राजापत्यं दिनत्रये॥

"मासे चान्द्रमृतौ तत्तु द्विगुणं मुनिभिः स्मृतम्। अतः परं न शुद्धिः स्यात्कारीषदहनादृते॥

"अयस्कारस्त्रियं गत्वा क्षौरकस्य तथैव च"॥ इति।

**ब्रह्मचण्डालीगमने प्रायश्चित्तम्**। ब्रह्मचण्डालस्त्रीगमने प्रायश्चित्तमाह **मनुः**—

"अस्थीनि परकीयानि भृत्यर्थं यो हरेद्विजः। पादप्रस्थानमात्रेण स चण्डालसमो भवेत्॥

२० "मूल्यं गृहीत्वा दाहादिप्रेतकृत्यं करोति यः। काशीं गच्छेत्परार्थं यस्तौ चण्डालसमौ स्मृतौ॥

"एतेषां यः स्त्रियो गच्छेच्चण्डालीगमनोदितम्। प्रायश्चित्तं प्रकुर्वीत कारीषवधवर्जितम्॥

"पुनःसंस्कारविधिना कर्तव्यं विधिचोदनात्"॥ इति।

**रजस्वलागमने प्रायश्चित्तम्**। रजस्वलागमने **पराशरः** (७।१९)—

"प्रथमेऽहनि चण्डाली द्वितीये ब्रह्मघातिनी। तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति"॥

२५ चण्डाल्यादिगमने यदुक्तं तदुदक्यागमनेऽपीत्यर्थः। तथा च **मार्कण्डेयः**—

"यो विप्रः पञ्चबाणार्तो यभेत्पत्नीं रजस्वलाम्॥

"प्रथमेऽहनि चेत् गच्छेच्चण्डालीगमने च यत्। तत्कृत्वा शुद्धिमाप्नोति ह्यन्यथा दोषभाक् भवेत्॥

"द्वितीयेऽहनि ब्रह्मघ्नी गमने यदुदाहृतम्। तदत्रापि नियोक्तव्यं नान्यथा शुद्धिमाप्नुयात्॥

"तृतीये रजकी सङ्गे प्रायश्चित्तं तदत्र हि। कृत्वा शुद्धिमवाप्नोति इह लोके परत्र च"॥ इति

३० अज्ञानकृते रजस्वलागमने **मनुः** (११।१७३)—

"अमानुषीषु पुरुषे उदक्यायामयोनिषु। रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत्।

**संवर्तः**—

"रजस्वलां च यो गच्छेत् गर्भिणीमष्टमासिकीम्। तस्य पापविशुध्यर्थमतिकृच्छ्रं विशोधनम्"॥ इति।

**गौतमः**—

३५ "यदा रहः पुष्पवतीं द्विजस्तामुद्वहेद्यदि। कालान्तरे यदा गच्छेत्तदा तां परिवर्जयेत्॥

१ गघ-नि। २ कगघ-कतु। ३ क्ष-पश्ये।

" यद्दहे तन्मनःशुद्धिं तदा चान्द्रायणं चरेत् । कामातुरस्तदा वर्तेत्स चण्डालसमो भवेत् ॥
" पुत्रोत्पत्तिर्यदा भूयात्तदा पतित एव सः । माता पिता च पुत्रश्च त्रयस्ते वृषलाः स्मृताः " ॥

**विधवागमने प्रायश्चित्तम्** । विधवागमने **देवलः**—

" ब्राह्मणो मद्लोभेन विधवां विप्रनन्दिनीम् । यभेत्कामातुरः पश्चात् ज्ञात्वाऽसौ पतिवर्जिता ॥
" इति तत्र व्रजेद्गन्धमादनं पर्वतोत्तमम् । तत्र चापाग्रमासाद्य प्रातः स्नायाद्दिनेदिने । ५
" मासमात्रेण शुद्धिः स्यादन्यथा दोषभाक् भवेत् " ॥ ज्ञानपूर्वके तु गमने **पराशरः**—
" ज्ञात्वा विप्रः सकृद्गत्वा विधवां कामपीडितः । न तस्य निष्कृतिर्दृष्टा कारीषदहनादृते ॥
" उभयोरपि सम्मत्या गच्छेत्तु विधवां द्विजः । त्रिवारं क्ष्मां परिक्रम्य पुनस्संस्कारपूर्वकम् ॥
" पञ्चगव्यं पिबेत् पश्चाच्छुद्धिमाप्नोति पौर्विकीम् " ॥

एतद्गर्भानुत्पत्तिविषयम् । गर्भोत्पाते तु पतितप्रायश्चित्तम् । तथा **हेमाद्रौ**— १०
" यो विप्रो विधवां साध्वीं गच्छेद्वा गर्भधारणात् । स चण्डालसमो ज्ञेयः पतितः स्यान्न संशयः " ॥
यत्तु **चतुर्विंशतिमते**ऽभिहितम्— " विधवागमने कृच्छ्रमहोरात्रसमन्वितम् " इति तद्रेतःसेकात्प्राङ्निवृत्त्यभिप्रायम् । **मार्कण्डेयः**—
" दासी मानधनं हन्ति वेश्या हन्ति वयो यशः । विधवाऽऽयुः श्रियं हन्ति सर्वं हन्ति पराङ्गना " ॥

**दास्यादिगमने प्रायश्चित्तम्** । १५

" एकस्मिन्नह्नि यो दासीं यभेत्कामातुरः सकृत् । यावकं तत्र कर्तव्यं पराकं तु दिनत्रये ॥
" प्राजापत्यं तथा मासे वर्षे चान्द्रं प्रकल्पितम् । अतःपरमवाप्नोति चण्डालत्वं विगर्हितम् ॥
" द्विजः कामातुरोऽभीक्ष्णं वेश्यां यदि यभेद्भुवि । यदीच्छेच्छुद्धिमतुलां षडब्दं कृच्छ्रमाचरेत् ॥
" पाषण्डशूद्र[3]पतितबौद्ध[2]स्त्रीभिर्यभेद्यदि । दिनत्रये यावकं स्यात्तप्तं मासे प्रकीर्तितम् ॥
" गर्भे वा पुत्रजनने बहिष्कारो विधीयते । मद्यपानरतां नारीं द्विजः कामातुरो यभेत् ॥ २०
" मासमात्रे तु चान्द्रं स्यात् षाण्मासे तु षडब्दकम् । वत्सरे पतितो भूयात्तत्प्रायश्चित्तमाचरेत् ॥
"तस्योपनयनं भूयः प्रायश्चि[4]त्तं ततः परम्"॥ इति। प्रायश्चित्ताकरणे **आपस्तम्बः** (२।१०।२७।८)—
" नाश्य आर्यः शूद्रायाम् " इति । आर्यस्त्रैवर्णिकः शूद्रायां परभार्यायां प्रसक्तो नाश्यः राज्ञा राष्ट्रान्निर्वास्य इत्यर्थः । **संवर्तः**—
" शूद्रीं तु ब्राह्मणो गत्वा मासं मासार्धमेव वा । गोमूत्रयावकाहारो मासार्धेन विशुध्यति " ॥ २५
**आपस्तम्बः** ( १।१०।२७।१० )—
" अनार्यां शयने बिभ्रद्ददद्वृद्धिं कषायपः । अब्राह्मण इव वन्दित्वा तृणेष्वासीत पृष्ठतः " ॥
अनार्यां शूद्रामुपगच्छन् ददद्वृद्धिं वृध्या जीवन् सुराव्यतिरिक्तं मद्यं कषायः तस्य पाता कषायपः। यश्चाब्राह्मण इव सर्वान् वन्दित्वा स्तौति सः सर्वोऽपि तृणेषूदयादारभ्यासीत यावदादित्यः पृष्ठं तपति पश्चाद्भागं तपतीत्यर्थः । अभ्यासे एवमभ्यासो यावता शुद्धिं मन्यते । ३०

**मुखमैथुने प्रायश्चित्तम्** । मुखेमैथुने **उशनाः**—" यस्तु ब्राह्मणो धर्मपत्नीं मुखे मैथुनं सेवेत स दुष्यति प्राजापत्येन शुध्यति " ।

**पश्वादिगमने प्रायश्चित्तम्** ॥ पश्वादिगमने **पराशरः** ( १०।१५ )—
" पशुवेश्यादिगमने महिष्युष्ट्रीकपीस्तथा । खरिणीं[5] सूकरीं गत्वा प्राजापत्यं समाचरेत् " ॥ इति ।

---

१ ग–तपो । २ कग–बौद्ध । ३ कग–शूद्र । ४ कग–पञ्चगव्यं । ५ ग–खरीं च ।

सकृद्गमने त्वाह स एव ( १०।१६ )—“ महिष्युष्ट्रीखरीगामी त्वहोरात्रेण शुध्यति ”॥ इति ।
स एव ( १०।१६ )—“ गोगामी च त्रिरात्रेण गामेकां ब्राह्मणे ददत् ” ॥ इति ।
इदं रेतःसेकात्पूर्वंनिवृत्तौ वेदितव्यम्
“ रेतःसेकान्तगमने कुर्यात्सान्तपनं बुधः । तप्तकृच्छ्रं चरेद्गत्वा गां द्विजो मदनातुरः ” ॥ इति
५ स्मरणात् । मनुः ( ११।१७४ )—
“ मैथुनं तु समासेव्य पुंसि योषिति वा द्विजः । गोयानेऽप्सु दिवा चैव सवासा स्नानमाचरेत् ”॥ इति ।
गोयाने शकटादौ रेतःस्खलने प्रायश्चित्तम् । रेतःस्खलने पराशरः ( १२।५७ )—
“ गृहस्थः कामतः कुर्यात् रेतसः स्खलनं भुवि । सहस्रं तु जपेद्देव्याः प्राणायामैस्त्रिभि सहः ”॥ इति ।
भुवीत्येतद्वस्त्रादेरुपलक्षणम्
१० “ वस्त्रे जले तथा मार्गे कटादौ रेत उत्सृजेत् । परेद्युर्वा तदानीं वा सचेलः स्नानमाचरेत् ॥
“जपेत्सहस्रं गायत्रीं ततः शुद्धिमवाप्नुयात्” ॥ इति स्मृतेः । अकामकृते याज्ञवल्क्यः (प्रा. २७८)—
“यन्मेऽद्य रेत इत्याभ्यां स्कन्नं रेतोऽभिमन्त्रयेत् । स्तनान्तरं भ्रुवोर्मध्यं तेनानामिकया स्पृशेत्”॥ इति ।
“यन्मेऽद्य रेतः पुनर्मामैत्विन्द्रियम्” इति द्वाभ्यामनामिकया रेत आदाय स्तनयोर्भ्रुवोर्मध्यमुपस्पृशेत् ।
कण्वः—“यत्नोत्सर्गे गृहीत्वा च वारुणीभिरुपस्पृशेत् । वानप्रस्थो यतिश्चैव चरेच्चान्द्रायणव्रतम्”॥
१५ शाण्डिल्यः—
“ वानप्रस्थो यतिश्चैव स्खलने सति कामतः । पराकत्रयसंयुक्तमवकीर्णिव्रतं चरेत् ” ॥ इति ।
काश्यपः—
“सूर्यस्य त्रिर्नमस्कारं स्वप्ने सिक्त्वा गृही चरेत् । वानप्रस्थो यतिश्चैव त्रिः कुर्यादघमर्षणम्” ॥ इति ।

**अवकीर्णिप्रायश्चित्तम्** । ब्रह्मचारिणो रेतःस्सखलने मनुः (११।१२०-१२२-१२३)—

२० “ कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः । अतिक्रमं व्रतस्याहुर्धर्मज्ञा ब्रह्मवादिनः ॥
“ एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् । सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्तयन् ॥
“ तेभ्यो लब्धेन भैक्षेण वर्तयन्नैककालिकम् । उपस्पृशंस्त्रिषवणमब्देनैकेन शुध्यति ॥
“ अवकीर्णीविशुध्यर्थं चान्द्रायणमथापि वा ” ॥ ( ११७ )
“अवकीर्णी तु काणेन गर्दभेन चतुष्पथे । स्थालीपाकविधानेन यजन्नैर्ऋतिभिर्निशि” ॥ (११८) इति ।
२५ संवर्तः—
“ब्रह्मचारी तु यः स्कन्देत् कामतः शुक्रमात्मनः।अवकीर्णीव्रतं कुर्यात्स्नात्वा शुद्ध्येदकामतः”॥ इति ।
बोधायनः ( २।१।२९-३१ )—“ यो ब्रह्मचारी स्त्रियमुपेयात्सोऽवकीर्णी । स गर्दभं पशुमालभेत ,
नैर्ऋतः पशुः पुरोडाशश्च रक्षोदैवतो यमदैवतो वा ” ॥ इति । जातुकर्णिः—
“ खण्डितं व्रतिना रेतो येन स्यात् ब्रह्मचारिणा । कामतोऽकामतः प्राहुरवकीर्णीति तं बुधाः ॥
३० “ आलभेत विशुध्यर्थं नैर्ऋतं गर्दभं पशुम् ” इति ।

**कौशिकस्तु** नैष्ठिकादीनां कृतप्रायश्चित्तानामपि इह व्यवहारो नास्तीत्याह—

“नैष्ठिकानां व्रतस्थानां यतीनां चावकीर्णिनाम् । शुद्धानामपि लोकेऽस्मिन्प्रत्यापत्तिर्न विद्यते” ॥ इति ।

**ऋतुकालातिक्रमे प्रायश्चित्तम्** । ऋतुकालातिक्रमे पराशरः ( ४।१४ )—

“ ऋतौ न गच्छेद्यो भार्यां सोऽपि कृच्छ्रार्धमाचरेत् ” ॥

---

१ ग्ध–रुत्वा । २ ग्ध–यजेत निर्ऋतिं निशि ।

**कात्यायनः**—
" ऋतुस्नातां द्विजो भार्यां व्रतश्राद्धविवर्जितः । स्वयं च रोगरहितो यभेत्सन्तानकाम्यया ॥
" अनिमित्ततया विप्रः पत्नीमृतुमतीं त्यजेत् । भ्रूणहत्यामवाप्नोति प्राजापत्यार्धमाचरेत् " । इति ।
**बोधायनः**—
"ऋतौ न गच्छेद्यो भार्यां नियतां धर्मचारिणीम् । नियमातिक्रमे तस्य प्राणायामशतं स्मृतम्"॥ इति। ५
कृच्छ्रार्धप्रत्याम्नायत्वेन प्राणायामशतं कार्यमिति भावः ।

**स्त्रीबालवृद्धातुराणामर्धप्रायश्चित्तम्** ।

ऋतुस्नातायाः स्त्रिया अनुपसर्पणे तदर्धं प्रायश्चित्तमुन्नेयम् । तथा च **भृगुः**—
" अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः । प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याधित एव च"॥ इति।

**शपथोल्लङ्घने प्रायश्चित्तम्** । १०

" केनचिन्निमित्तेन शपथमुल्लंघितवतः प्रायश्चित्तमाह **पराशरः** ( १३।५०–५२ )—
" यस्तु क्रुद्धः पुमान् ब्रूयात् जायायास्तु अगम्यताम् । पुनरिच्छति चेदेनां विप्रमध्ये तु श्रावयेत् ॥
"श्रान्तः क्रुद्धस्तमोऽन्धो वा क्षुत्पिपासाभयार्दितः । दानं पुण्यं कृतं कृत्वा प्रायश्चित्तं दिनत्रयम् ॥
" उपस्पृशेत्त्रिषवणं महानद्युपसङ्गमे । चीर्णान्ते चैव गां दद्यात् ब्राह्मणान् भोजयेद्दश " ॥ इति ।
विप्रमध्ये परिषन्मध्ये स्वपापं निवेदयेत् । अहं शपथप्रतिज्ञावेलायां श्रान्त आसन् । अतः श्रमादि- १५
दोषप्रयुक्तमिदम् । अगम्यता प्रतिज्ञानं न तु विवेकपूर्वकम् । तस्मादस्य पापस्य प्रायश्चित्तमनु-
गृह्णन्तु भवन्त इति । यश्च दानं काशीयात्रादिपुण्यं च प्रतिज्ञाय पश्चादश्रद्धया न करोति तेषु
त्रिषु निमित्तेषु विप्रैर्निर्दिष्टमिदं प्रायश्चित्तं कुर्यादित्यर्थः ।

**क्षत्रियादीनां ब्राह्मणीगमने प्रायश्चित्तम्** । क्षत्रियादीनां ब्राह्मणीगमने **संवर्तः**—
" कथञ्चित् ब्राह्मणीं गच्छेत्क्षत्रियो वैश्य एव वा । गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥ २०
" शूद्रस्तु ब्राह्मणीं गत्वा कथंचित्काममोहितः । गोमूत्रयावकाहारो मासेनैकेन शुध्यति " ॥
एतदत्यन्तव्यभिचारिब्राह्मणीविषयम् । इतरविषये वधस्मरणात् । तथा च **वसिष्ठः** (२१।१)—
" शूद्रश्चेत् ब्राह्मणीमुपगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वपनं कारयित्वा
सर्पिषाऽभ्यज्य नग्नां कृष्णं खरमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते " ॥
**आपस्तम्बः** ( २।१०।२७।९)—" वध्यः शूद्र आर्यायामिति " । त्रैवर्णिकायामित्यर्थः । एतच्च २५
योऽन्तःपुरादिष्वधिकृतो भवति रक्षकस्तद्विषयम् । अन्यत्र शिश्नच्छेदनम् । तथा च **गौतमः**
( १२।२–३ )—" आर्यस्त्र्यभिगमने लिङ्गोद्धारः स्वहरणं च गोप्ता चेद्वधोऽधिकः " इति ।
**कात्यायनः**—" वर्णत्रयस्य विप्राणां भार्यामातेति गीयते । तद्द्वारे यदा गच्छेद्वर्णत्रयमकामतः ॥
" शिश्नछेदस्वहरणं कार्यं क्षत्रियवैश्ययोः । शूद्रस्य मौसलं प्राहुरिति शास्त्रेषु निश्चितम्"। इति ।

**स्त्रियाः परपुरुषगमने प्रायश्चित्तम्**— ३०

स्त्रियाः परपुरुषगमने प्रायश्चित्तमुक्तं **चतुर्विंशतिमते**—
" रजसा शुध्यते नारी परपुंसाभिगामिनी । तथापि मुनिना प्रोक्तं प्रायश्चित्तं समाचरेत् ॥
" कृच्छ्रार्धं ब्राह्मणी कुर्याद्विप्रस्य गमने सति । क्षत्रियस्य चरेत्कृच्छ्रं वैश्ये सान्तपनं चरेत् ॥
" शूद्रस्य गमने चैव पराकं च समाचरेत् " ॥ इति । एतत्सकृद्गमनविषयम् ।
अभ्यासे तु **उशनाः**—" व्यभिचारिणीं भार्यां कुचेलपिण्डपरिभूतां निवृत्ताधिकारां चान्द्रायण- ३५
प्रायश्चित्तं प्राजापत्यं वाचारयेत् " ॥ इति ।

---

१ कग–जन् । २ गघ–ण्यमकृत्वा वा ।

**मनुः** ( ११।१७६।१७७ )—

" विप्रदुष्टां स्त्रियं भर्ता निरुन्ध्यादेकवेश्मनि । यत्पुंसः परदारेषु तच्चैनां चारयेतद्व्रतम् ॥

" सा चेत्पुनः संप्रदुष्येत्सदृशेनोपमन्त्रिता । कृच्छ्रं चान्द्रायणं चैव तदस्याः पावनं स्मृतम् "॥ इति ।

**संवर्तः**—

५ " ब्राह्मण्याः शूद्रसंपर्के कथंचित्समुपागते । कृच्छ्रं चान्द्रायणं तस्याः पावनं परमं स्मृतम् " ॥

**याज्ञवल्क्यः** ( व्य. २८६ )—" प्रातिलोम्ये वधः पुंसां स्त्रीणां नासादिकृन्तनम् " ॥

**मनुः** ( ९।१५५ )—

" ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण सङ्गताः । अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः " ॥

गर्भे पाते च ब्राह्मण्याः प्रायश्चित्तम् । **स्मृत्यन्तरेऽपि**—

१० " विप्रगर्भे पराकं स्यात् ब्राह्मण्या क्षत्रियस्य तु । गर्भे चान्द्रं वैश्यगर्भे पराकेण समन्वितम् ॥

" चान्द्रायणं शूद्रगर्भे तस्यास्त्यागो विधीयते " ॥ इति । गर्भो द्विविधः । पतिजन्योऽन्यै-[1]जन्यश्च । सवर्णजोऽसवर्णजश्च । तत्र सर्वत्र गर्भपाते प्रायश्चित्तमुक्तं **चतुर्विंशतिमते**—

" गर्भपाते समुद्दिष्टं यथावर्णविधिव्रतम् । राजगर्भे विशेषः स्यात् यथोक्तमृषिभिः पुरा ॥

" ब्रह्मगर्भवधे कृच्छ्रमब्दं सान्तपनादिकम् । क्षत्रगर्भवधे चैव चरेच्चान्द्रायणद्वयम् ॥

१५ " वैश्यस्य चैन्दवं प्रोक्तं पराकं शूद्रघातने । प्रायश्चित्तमिदं प्रोक्तं गर्भपाते विशेषतः " ॥ इति ।

**व्यभिचारिस्त्रीणां त्यागविचारः** । **याज्ञवल्क्यः** ( आ. ७२ )—

" व्यभिचारऋतौ शुध्येत् गर्भे त्यागो विधीयते । गर्भभर्तृवधादौ च तथा महति पातके " ॥

ऋतौ शुद्धिरिति मानसव्यभिचाराभिप्रायम् । " रजसा स्त्री मनोदुष्टा " इति **स्मृतेः**[2] । शूद्रगर्भे तस्यास्त्यागः । तथा गर्भवधे भर्तृवधे महापातके च । आदिग्रहणेन शिष्यादिगमने च त्यागः ।

२० तथा च **वसिष्ठः** ( २१।१० )—

"चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या । पतिघ्नी तु विशेषेण जुङ्गितोपगता च या" ॥ इति ।

जुङ्गितः श्वपाकादिः । **चतुर्विंशतिमते**—

" चतस्र एव सन्त्याज्याः पतने सत्यपि स्त्रियः । श्वपाकोपहताया तु भर्तृघ्नी पितृपुत्रगा" ॥ इति ।

त्यागश्च उपभोगधर्मकार्ययोः । न तु सर्वथा तस्याः । तथा **चतुर्विंशतिमते**—

२५ " स्त्रीणां नास्ति परित्यागो ब्रह्महत्यादिभिर्विना । तत्रापि ग्रहमध्ये तु प्रायश्चित्तानि कारयेत् ॥

" परित्यक्ता चरेत्पापं ब्रह्मघ्नं वापि किञ्चन । तत्पापं शतधा भूत्वा बान्धवानधिगच्छति " ॥

**माधवीये** तु परित्यागनिषेधोऽनुतापोपेतप्रायश्चित्ताधिकारिस्त्रीविषयः ' प्रायश्चित्तानि कारयेत् ' इत्यभिधानात् । अनुतापरहितायाः शूद्रगर्भादौ सर्वथा त्याग एवेत्युक्तम् ।

**अनिमित्ततया भर्तृभार्यान्यतरपरित्यागे प्रायश्चित्तम्** । अनिमित्ततया भार्यापरित्यागे

३० भर्तृपरित्यागे **चापस्तंबः** ( १।१०।२८।१९-२० )—"दारव्यतिक्रमी खराजिनं बहिर्लोम परि-धाय दारव्यतिक्रमिणे भिक्षामिति सप्तागाराणि चरेत्[1] । सा वृत्तिः षाण्मासान् । स्त्रियास्तु भर्तृ-व्यतिक्रमे कृच्छ्रद्वादशरात्राभ्यासः तावन्तं कालम्" ॥ इति । षाण्मासान्प्राजापत्याभ्यासः इत्यर्थः ।

आपन्नायाः बलाच्छूद्रादिसंपर्के सति रेतःसेकासेकयोः प्रायश्चित्तद्वयमाह **पराशरः** ( १०।२५-२६ )—

३५ "बन्दीग्रहेण या भुक्ता हत्वा बध्वा भयाद्बलात् । कृत्वा सान्तपनं कृच्छ्रं शुध्येत्पाराशरोऽब्रवीत् "॥इति ।

---

१ कगघ—जारजन्यो । २ मनुस्मृतेः ५।१०७

" सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्मभिः । प्राजापत्येन शुध्येत ऋतुप्रस्रवणेन च " ॥
इति भयाद्भयमुत्पाद्येत्यर्थः ।

**विधवाया गर्भे त्यागः** । विधवागमने पुरुषस्य यत्प्रायश्चित्तं तदर्धं विधवायाः द्रष्टव्यम् ।
विधवायाः गर्भधारणे परित्यागमाह **पराशरः** ( १०।२० )—
" जारेण जनयेद्गर्भं मृते व्यक्ते गते पतौ । तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीम् " ॥ इति । ५
**नागरखण्डे**—
" वर्णत्रयाद्वा विधवा स्ववर्णाद्वाऽथ गर्भिणी । विप्रैस्तस्याः परित्यागः कार्यो धर्मपरायणैः ॥
" तद्दर्शनान्महापापमवाप्नोतीह पूर्वजः " ॥

**विष्णुधर्मे**—
" वर्णत्रयात्स्ववर्णाद्वा गर्भिणी विधवा यदि । तस्या दर्शनमात्रेण ब्रह्महत्यामवाप्नुयात् ॥ १०
" अतस्त्यागो मुनिश्रेष्ठैर्विधवाया विधीयते " ॥ इति ।

**शङ्कितव्यभिचारे स्त्रीणां कर्तव्यम्** । शङ्कितव्यभिचारां ब्राह्मणीं प्रत्याह **पराशरः** (१०।३५)–
"ब्राह्मणी तु यदा गच्छेत्परपुंसा समन्विता । सा तु नष्टा विनिर्दिश्या न तस्या गमनं पुनः"॥ इति ।
पित्रादिभ्यो व्यतिरिक्तः पुमान्पर इत्युच्यते । तेन पुंसा समन्विता प्रीत्यतिशयद्योतकहास्यादि-
पुरस्सरं सम्यगन्विता ब्राह्मणस्त्री केनचिद्व्याजेन ग्रामान्तरं देशान्तरं वा गत्वा चिरं निवसेत् १५
सा बन्धुमध्ये नष्टेति प्रख्यापनीया । न तस्याः पुनः गृहगमनमस्ति । स्वगृहं प्रत्यागतापि
निर्वासनीयेत्यर्थः ।
परपुरुषेण यथोक्तसमन्वयाभावेऽपि स्वातन्त्र्येण चिरं निर्गता स्त्री परित्याज्येत्याह **स** एव (१०।३२)–
"कामान्मोहात्तु या गच्छेत्त्यक्त्वा बन्धून्सुतान् पतिम् । सा तु नष्टा परे लोके मानुषेषु विशेषतः" ॥ इति ।
बन्ध्वादीनामन्यतमस्य समीपे स्थातव्यं इति स्त्रीधर्मः । तथा च **याज्ञवल्क्यः** ( आ. ८६ )— २०
" पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः । हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत् " ॥ इति ।
एवं च सति या स्त्री कामाद्वा यथोक्तस्त्रीधर्मापरिज्ञानाद्वा बन्ध्वादीन्परित्यज्य ग्रामान्तरादौ चिरं
वस्तुं गच्छेत्सा परलोके नष्टा नरकं प्राप्नोति । बन्ध्वादिषु च प्रवेशं न लभते ।

**बन्धुराहित्येन गमनेऽपि त्यागापवादः** । उक्तार्थस्य निमित्तविशेषेणापवादमाह
**स** एव—"मदमोहहता नारी क्रोधाद्दण्डादिताडिता । अद्वितीयागता चैव पुनरागमनं भवेत् "॥ इति । २५
मदः पतिश्वशुरादितिरस्कारजनको मानसो दोषः । पतिशुश्रूषणं स्त्रीणां परमो धर्म इति
विवेकाभावो मोहः । उक्तदोषद्वयोपेतां नारीं शिक्षितुं पत्यादयो यदा दण्डादिभिस्ताडयेयुः
तदा व्यथिता सा यथोक्तबन्ध्वादिसहायं विना स्वयमेकाकिन्येव यद्यपि निर्गच्छेत्तथापि स्वगृहे
पुनरागमनं प्राप्नुयादित्यर्थः । पुनरागमने प्रतीक्षणकालविधिमाह **पराशरः** ( १०।३३ )—
" दशमे तु दिने प्राप्ते प्रायश्चित्तं न विद्यते । दशाहं न त्यजेन्नारीं त्यजेन्नष्टश्रुतां तथा " ॥ इति । ३०
पुनरागमने प्रतीक्षां दश दिनानि कुर्यात् । दशमदिने तया गृहे प्राप्ते सति नेयं प्रायश्चित्तभाग्भवेत् ।
ऊर्ध्वं तु व्यभिचारोचितप्रायश्चित्तभाग्भवति । दशाहमध्ये तदीयव्यभिचाराश्रवणे तां न परित्यजेत् ।
यदि नष्टत्वेन सा श्रूयेत् तदा दशाहमध्ये त्वकृतप्रायश्चित्तां तां परित्यजेदित्यर्थः ।

**स्वातन्त्र्येण गताया अत्यागे भर्त्रादीनां प्रायश्चित्तम्** । नष्टां श्रुत्वापि यदि भर्त्रादयस्तां
न परित्यजेयुः तदा तेषां प्रायश्चित्तमाह **स** एव (१०।३४)—"भर्ता चैव चरेत्कृच्छ्रं कृच्छ्रार्धं चैव ३५

बान्धवाः" इति। अकृतप्रायश्चित्तानां तेषां गृहे भोजनादिकमाचरन्नुपवासेन शुध्यतीत्याह **स एव** ( १०।३४ )—" तेषां भुक्त्वा च पीत्वा चाहोरात्रेण शुध्यति " ॥ इति।

**ताडनादिना निर्गच्छन्त्याः त्यागविचारः**। ताडनादिना निर्गच्छन्त्याः पुरुषान्तर-समन्वयाभावेऽपि दशाहादूर्ध्वं त्यागे को हेतुरित्यत आह **स एव** ( १०।३५ )—

५ " ब्राह्मणी तु यदा गच्छेत्परपुंसा विवर्जिता। गत्वा पुंसः शतं याति त्यजेयुस्तां तु गोत्रिणः " ॥ इति। यद्यपि क्रोधादिना निर्गच्छन्ती न तदानीं पुरुषान्तरेण समवैति तथापि गत्वा कालान्तरेण शत-संख्याकेषु पुरुषेषु सञ्चरतीति मत्वा बान्धवास्तां परित्यजेयुः। ब्राह्मण्या अपि बहुपुरुषसञ्चारिण्या गणिकात्वं भवति। तदाह **प्रजापतिः**—

"अभिगच्छति या नारी बहुभिः पुरुषैर्मिथः। व्यभिचारिणीति सा ज्ञेया प्रत्यक्षं गणिकेति च " ॥ इति।

१० **व्यभिचारिण्या गृहप्रवेशे शुद्धिप्रकारः**। सा यद्गृहं प्रविशति तस्य शुद्धिप्रकारमाह **पराशरः** ( १०।३६–४२ )—

" पुंसां यदि गृहं गच्छेत्तदशुद्धं गृहं भवेत्। पितृमातृगृहं यच्च जारस्यैव तु तद्गृहम् ॥

" उल्लिख्य तद्गृहं पश्चात्पञ्चगव्येन सेचयेत्। त्यजेच्च मृन्मयं पात्रं वस्त्रं काष्ठं च शोधयेत् ॥

" संभारान् शोधयेत्सर्वान् गोवालैश्च फलोद्भवान्। ताम्राणि पञ्चगव्येन कांस्यानि दश भस्मभिः ॥

१५ " प्रायश्चित्तं चरेद्विप्रो ब्राह्मणैरुपपादितम्। गोद्वयं दक्षिणां दद्यात्प्राजापत्यद्वयं चरेत् ॥

" इतरेषामहोरात्रं पञ्चगव्येन शोधनम् ॥

" उपवासैर्व्रतैः पुण्यैः स्नानसन्ध्यार्चनादिभिः। जपहोमदयादानैः शुध्यन्ते ब्राह्मणादयः ॥

" आकाशं वायुरग्निश्च मेध्यं भूमिगतं जलम्। न दुष्यन्ति च दर्भाश्च यज्ञेषु चमसा यथा " ॥ इति।

सेयं दुर्ब्राह्मणी स्वनिवासाय पत्युर्मातुर्वा जारस्य वाऽन्यस्य वा दाक्षिण्यवतः यस्य कस्यचिद्गृहं

२० प्रविशति तद्गृहं चण्डालाध्युषितगृहमिवात्यन्तमपवित्रं भवति। तत्रोल्लेखनं भूमेस्तेन कुड्यादिलेपना-दिकमुपलक्ष्यते। वस्त्रकाष्ठयोर्धान्यादीनां संभाराणां च यथोक्तं शोधनं कुर्यात्। नालिकेरादिफल-संभूतानां पात्राणां गोवालैर्मार्जनम्। ताम्रस्याम्लादिना शुद्धिरुक्ता पूर्वम्*। अत्र तु पञ्चगव्येनेति विशेषः। कांस्यपात्राणां दशकृत्वो भस्मनाऽघर्षणम्। गृहस्वामी तु परिषन्निर्दिष्टं सदक्षिणं प्राजापत्य-द्वयं चरेत्। अन्येषां तु तद्गृहवासिनामुपवासः पञ्चगव्यप्राशनं च। तद्गृहवासिभिः सह व्यवहर्तॄणां

२५ गृहान्तरवासिनां निर्दिष्टेनोपवासादीनामन्यतमेन शुद्धिः। तद्गृहसंबन्धिनामाकाशादीनां निर्लेपत्वात् न यत्नसंपादनीया शुद्धिः। तत्र दृष्टान्तो यज्ञेष्विति। चिरकालवासविषयमिदं परिशोधनम्। सकृत्प्रवेशे तु मार्जनादिभिः शुद्धिरिति **माधवीये**।

**ब्राह्मण्याश्चण्डालादिगमने प्रायश्चित्तम्**। अकामकृते चण्डालसंसर्गे ब्राह्मण्याः प्रायश्चित्तमाह **पराशरः** ( १०।१८–२३ )—

३० " चण्डालैः सह संपर्कं या नारी कुरुते ततः। विप्रान् दशावरान् कृत्वा स्वकं दोषं प्रकाशयेत् ॥

" आकण्ठसम्मिते कूपे गोमयोदककर्दमे। तत्र स्थित्वा निराहारा त्वहोरात्रेण निष्क्रमेत् ॥

" सशिखं वपनं कृत्वा भुञ्जीयाद्यावकौदनम्। त्रिरात्रमुपवासित्वा त्वेकरात्रं जले वसेत् ॥

" शङ्खपुष्प्यालतामूलं पत्रं च कुसुमं फलम्। सुवर्णं पञ्चगव्यं च क्वाथयित्वा पिबेज्जलम् ॥

---

* पृष्ठे

" एकभुक्तं चरेत्पश्चाद्यावत्पुष्पवती भवेत् । व्रतं चरति तद्यावत्तावत्संवसते बहिः ॥
" प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् । गोद्वयं दक्षिणां दद्याच्छुद्धिं पाराशरोऽब्रवीत्" ॥ इति ।
कामकृते सकृद्गमने त्वब्दकृच्छ्रमसकृद्गमने अग्निप्रवेशः ।
"सकृच्चण्डालगमने कामतस्तु कृते स्त्रियः । अब्दकृच्छ्रं स्मृतं तस्या अभ्यासेऽग्निप्रवेशनम्" ॥ इति स्मृतेः । ५

रेतस्सेकान्तचण्डालगमनस्य प्रायश्चित्तमभिधाय रेतस्सेकात्प्राङ्निवृत्तौ प्रायश्चित्तमाह पराशरः ( १०।२४ )—
" चातुर्वर्ण्यस्य नारीणां कृच्छ्रं चान्द्रायणं स्मृतम् । यथा भूमिस्तथा नारी तस्मात्तां न तु दूषयेत्" ॥
दूषणं त्यागः । चातुर्वर्ण्यस्येति ब्राह्मणीव्यतिरिक्तस्त्रीविषयम्
" रेतस्सेकात्प्राङ्निवृत्तौ चण्डालगमने सति । ब्राह्मणी निष्कृतिं कुर्याच्चान्द्रायणचतुष्टयम्" ॥ इति १० स्मृतेः ।

**ब्राह्मण्या म्लेच्छरजकादिगमने प्रायश्चित्तम्** । **संवर्तस्तु**—
" चण्डालं पुल्कसं म्लेच्छं श्वपाकं पतितं तथा । एतान् श्रेष्ठा तु या गच्छेत्कुर्याच्चान्द्रायणत्रयम् ॥
" रजकव्याधशैलूषवेणुचर्मोपजीविनः । ब्राह्मण्येतान् समागच्छेत्कुर्याच्चान्द्रायणत्रयम् " ॥ इति ।
गर्भधारणे **जाबालिः**— १५
" विप्राङ्गनायाश्चण्डालगर्भे तां दण्डयेन्नृपः । निकृत्य कर्णनासं तु निर्वास्य पतनाद्बहिः ॥
" राज्ञा कार्यस्त्याग एव न वधस्त्रीषु सम्मतः । क्षत्रवैश्यस्त्रियो राजा कारीषवधमाचरेत् " ॥ इति ।
तदेवं ब्रह्महत्यासुरापानस्वर्णस्तेयगुरुतल्पगमनानां महापातकानां प्रायश्चित्तानि निरूपितानि ।
प्रसङ्गादितरहननस्यापेयान्तरपानस्य स्तेयान्तरस्यागम्यागमनमात्रस्य च प्रायश्चित्तमुक्तम् ।

**अथ संसर्गस्य महापातकत्वविचारः** । महापातकिसंसर्गस्य प्रायश्चित्तमुच्यते । तस्य च २० महापातकित्वमुक्तं **मनुयाज्ञवल्क्यादिभिः** ( मनुः ११।५४ )—
" ब्रह्महत्यासुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संयोगं चैव पञ्चमम् " ॥ इति ।
" संवत्सरेण पतति पतितेन समाचरन् ( १८० ) । ब्रह्महा मद्यपस्तेनस्तथैव गुरुतल्पगः ॥
" एते महापातकिनो यश्च तैः सह संवसेत् " ॥ इति । तत्तत्प्रायश्चित्तं च संसर्गिण उक्तम् ॥
"यो येन पतितेनैषां संसर्गं याति मानवः । स तस्यैव व्रतं कुर्यात्संसर्गस्य विशुद्धये" ॥ (१८१) इति । २५
एतद्युगान्तरविषयम् । अत एव कलियुगधर्माभिधाने प्रवृत्तः **पराशरः** ब्रह्महत्यादिमहापातकचतुष्टयस्य प्रायश्चित्तमुक्तवान् । कलियुगे संसर्गदोषाभावमभिप्रेत्य संसर्गप्रायश्चित्तं नाभ्यधात् ।

**कर्मण एव पातित्यहेतुत्वम्** । तथा कर्मणा पातित्यं कण्ठरवेणाह **पराशरः** (१।२५)—
" कृते संभाषणादेव त्रेतायां स्पर्शनेन च । द्वापरे त्वन्नमादाय कलौ पतति कर्मणा ॥
" त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे " ॥ इति । ३०
**सुमन्तुः**—"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महापातकसंज्ञानि चत्वार्येव कलौ युगे" ॥ इति ।
अत्र चतुर्ग्रहणादेवकाराच्च संसर्गिणो न महापातकित्वम् । **स्मृतिकामधेनौ**—
" संसर्गदोषो नैव स्यान्महापातकिभिः कलौ । संसर्गदोषः स्तेनाद्यैर्न महापापनिष्कृतिः" ॥
तथा **स्मृत्यन्तरे** कलौ वर्जनीयानामनुक्रमे संसर्गदोषः पापेष्विति पठितम् ।

---

१ गघ–दकामादेँदवद्वयम् ।

**कलौ संसर्गस्य पापमात्रहेतुत्वम्** । संसर्गदोषस्य पातित्यापादकत्वाभावेऽपि पापमात्रापातकमस्तीत्याह **पराशरः** ( १२।७१ )—

"आसनाच्छयनाद्यानात्संभाषात्सहभोजनात् । सङ्क्रामन्ति हि पापानि तैलबिन्दुरिवांभसि" ॥ इति ।

तत्र प्रायश्चित्तमाह **स** एव ( ४।८ )—

५ " यो वै समाचरेद्विप्रः पतितादिष्वकामतः । पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥

" मासार्धमासमेकं वा मासद्वयमथापि वा । अब्दार्धमब्दमेकं वा तदूर्ध्वं चैव तत्समः ॥

" त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत् । तृतीये चैव पक्षे तु कृच्छ्रं सान्तपनं चरेत् ॥

" चतुर्थे दशरात्रं स्यात्पराकः पञ्चमे ततः । कुर्याच्चान्द्रायणं षष्ठे सप्तमे चैन्दवद्वयम् ॥

" शुध्यर्थमष्टमे चैव षण्मासान् कृच्छ्रमाचरेत् । पक्षसंख्याप्रमाणेन सुवर्णान्यपि दक्षिणा" ॥ इति ।

१० समाचरणं सहशयनादि ।

" एकशय्यासनं पङ्क्तिभाण्डपक्वान्नमिश्रणम् । याजनाध्यापने योनिस्तथैव सहभोजनम् ॥

" नवधा सङ्करः प्रोक्तो न कर्तव्योऽधमैः सह " ॥ इति **बृहस्पति**स्मरणात् । पतितादिष्वित्यादिशब्देन तत्पुत्रादयो गृह्यन्ते " पतितोत्पन्नः पतितो भवति " इति **वसिष्ठेन** ( १३।५१ ) तन्निन्दनात् । प्रथमः पक्षः पञ्चाहसंसर्गः । तत्र त्रिरात्रोपवासमाचरेत् । द्वितीये पक्षे प्राजापत्यम् । तृतीये

१५ सान्तपनम् । अत्र सान्तपनं सप्तरात्रं गृह्यते । अर्धमाससंसर्गश्चतुर्थः पक्षः । तत्र दशरात्रोपवासमाचरेत् । ऐन्दवद्वयं चान्द्रायणद्वयम् । किंचिदूनसंवत्सरसंसर्गः अष्टमः पक्षः । अत्र षण्मासान् कृच्छ्रमाचरेत् । षट्सु मासेषु प्राजापत्यकृच्छ्राणि पञ्चदश संपद्यन्ते । तदूर्ध्वं संसर्गे समपापे 'तदर्धं स्यात्' इति **वचनेन** तत्तत्प्रायश्चित्तार्धं द्रष्टव्यम् । सर्वेषु पक्षेषु यथोक्तं प्रायश्चित्तमनुष्ठाय तदङ्गत्वेन दक्षिणा दातव्या । तत्र प्रथमपक्षे सुवर्णमेकम् । एवमपरेष्वपि पक्षेष्ववगन्तव्यम् । **कूर्मपुराणेऽपि**—

२० " सङ्गं कृत्वाऽर्धमासे तु उपवासान् दशाचरेत् । पराकं माससंसर्गे चान्द्रं मासत्रये व्रतम् ।

"कृत्वा षाण्माससंसर्गं कुर्याच्चान्द्रायणद्वयम् । किञ्चिन्न्यूनाब्दसंसर्गे षण्मासं कृच्छ्रमाचरेत्" ॥ इति ।

**गोचर्मक्षेत्रलक्षणम्** । महापातकानां साधारणं प्रायश्चित्तमाह **पराशरः** ( १२।४३ )—

" गवां शतं सैकवृषं यत्र तिष्ठत्ययन्त्रितम् । तत्क्षेत्रं दशगुणितं गोचर्मपरिकीर्तितम् ॥

" ब्रह्महत्यादिभिर्युक्तो मनोवाक्कायकर्मजैः । एतद्गोचर्मदानेन मुच्यते सर्वकिल्बिषैः " ॥ इति ।

२५ एकवृषेण सहितं गोशतं यन्त्रणा रहितं विश्रमाय यावन्तं प्रदेशमाक्रम्य व्यवतिष्ठते तावान् भूप्रदेशो दशगुणितः सन् गोचर्मशब्देनाभिधीयते ।

**मिथ्याभिशंसनप्रायश्चित्तम्**—अभिशंसने दोषं प्रायश्चित्तं च दर्शयति **याज्ञवल्क्यः** ( प्रा. २८५–२८७ )—

" मिथ्याभिशंसने दोषो द्विः समोऽनृतवादिनः । मिथ्याभिशस्तदोषं च समादत्ते मृषा वदन् ॥

३० " महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् । अब्भक्षो मासमासीत स जापी नियतेन्द्रियः ॥

" अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा । निर्वपेत्तु पुरोडाशं वायव्यं पशुमेव वा " ॥ **मनुः**—

" पतितं पतितेत्युक्त्वा जारं चोरेति वा पुनः । वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषभाग्भवेत्" ॥

**गौतमः** ( २१।१७–१९ )—

" ब्राह्मणस्याभिशंसने दोषस्तावान् । द्विरनेनसि । दुर्बलहिंसायां चाविमोचने शक्तश्चेत् " ॥ इति ।

---

१ क–असा । २ कगघ–मृत ।

**बोधायनः**—" मिथ्याभिशंसने कृच्छ्रस्तदर्धमभिशंसितुः " ॥ इति । **मरीचिः**—
"स्तेयं वा व्यभिचारो वा हत्या वाऽप्यस्ति सर्वदा। इति यो वदते साधून् स मिथ्यावादवान् द्विजः॥
" देवकार्येषु पित्र्येषु निगर्ह्यो मिथ्यया वदन्। अस्ति चेत्तुल्यपापी स्यान्मिथ्यात्वे द्विगुणं भवेत्॥
" तस्य पापविशुद्ध्यर्थं प्रायश्चित्तं महत्तरम्। विप्रेषु तप्तकृच्छ्रं स्यादङ्गनास्त्विह च कायिकम्॥
" बालावृद्धातुरेष्वेवं वदन्पाराकमाचरेत्। क्षत्रियादिषु सर्वेषु प्राजापत्यमुदीरितम् " ॥ इति । ५
**गालवः**—
" मिथ्यापापेन वा बद्धो ह्यभिशस्त इतीरितः। पापमस्ति न वा लोके वार्ता सर्वत्र गण्यते।
" अयोग्यो हव्यकव्येषु निन्दितः सर्वदा जनैः। तस्माद्देहविशुध्यर्थं प्राजापत्यं चरेद्द्विजः।
" ततः शुद्धो भवत्येवं मिथ्यात्वे विप्रपुङ्गवः। दोषस्तु विद्यते यत्र तत्रोक्तां निष्कृतिं चरेत् "॥ इति।
दोषस्य सत्वे प्रतिपदोक्तं प्रायश्चित्तं कुर्यादित्यर्थः। असकृदभिशंसने **शङ्खः**—" नास्तिको १०
नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी मिथ्याभिशंसीत्येते पञ्चवत्सरं ब्राह्मणगृहे भैक्षं चरेयुः"॥ इति।
यत्तु नास्तिकविषये **वसिष्ठ**वचनम् ( २१।२९–३० ) " नास्तिकः कृच्छ्रद्वादशरात्रं चरित्वा
विरमेन्नास्तिक्यान्नानास्तिकवृत्तिस्त्वनिकृच्छ्रम् "। इति तत्सकृत्करणविषयमिति **माधवीये**।

**ब्राह्मणापगुरणादि प्रायश्चित्तम्**। ब्राह्मणापगुरणादौ **पराशरः** ( ११।५१ )—
" अपगूर्य त्वहोरात्रं त्रिरात्रं क्षितिपातने। अतिकृच्छ्रं च रुधिरे कृच्छ्रेऽभ्यन्तरशोणिते " ॥ इति। १५
अपगूर्य वधार्थं दण्डमुद्यम्य दिनमेकमुपवसेत्। भूमौ निपात्य त्रिरात्रं उपवसेत्। प्रहारे रुधिरे
निर्गते अतिकृच्छ्रं चरेत्। निर्गतं रुधिरमन्तरेव एकत्र घनीभूतं चेत्कृच्छ्रं चरेदित्यर्थः।
एतत्कलियुगाभिप्रायम्। " कलौ पाराशराः स्मृताः " इति **स्मरणात्**।
युगान्तरे तु **मनुः** ( ११।२०६–२०८ )—
" अपगूर्य त्वब्दशतं सहस्रमभिहत्य तु। जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते॥ २०
" शोणितं यावतः पांसून् संगृह्णाति द्विजन्मनः। तावंत्यब्दसहस्राणि तत्कर्ता नरके वसेत्॥
" अपगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने। कृच्छ्रातिकृच्छ्रे कुर्वीत विप्रस्योत्पाद्य शोणितम् " ॥
**याज्ञवल्क्यः** ( प्रा. २९३ )—
"विप्रदण्डोद्यमे कृच्छ्रो ह्यतिकृच्छ्रो निपातने। कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते"॥इति।
**बोधायनोऽपि** ( २।१।७ )— २५
" अपगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने। कृच्छ्रं चान्द्रायणं चैव लोहितस्य प्रवर्तने॥
" तस्मान्नैवापगुर्वीत न च कुर्वीत शोणितम् " ॥ इति।

**ब्राह्मणतिरस्कारे प्रायश्चित्तम्**। ब्राह्मणस्य तिरस्कारे **पराशरः** ( ११।४९ )—
" हुङ्कारं ब्राह्मणस्योक्त्वा त्वंकारं च गरीयसः। स्नात्वा तिष्ठन्नहःशेषमभिवाद्य प्रसादयेत् " ॥
ब्रह्मविदं प्रति हुङ्कारं यः प्रयुङ्क्ते यश्च वयसा विद्यया वा ज्येष्ठं प्रति त्वमित्येकवचनं प्रयुङ्क्ते ३०
तावुभौ स्नात्वा यावदस्तमयं निराहारौ स्थित्वा रात्राविभिवादनेन तं क्षमापयेतामित्यर्थः।

**ब्राह्मणताडनादौ प्रायश्चित्तम्**। ताडनादौ प्रायश्चित्तमाह **स एव** ( ११।५० )—
" ताडयित्वा तृणेनापि कण्ठे बद्ध्वा च वाससा। विवादेन विनिर्जित्य प्रणिपत्य प्रसादयेत्" ॥ इति।

---
१ ग–अनर्हो।

प्रणिपातेन उपवासोऽप्युपलक्ष्यते। तथा च **मनुः** ( ११।२०४–२०५ )—
“ हुंकारं ब्राह्मणस्योक्त्वा त्वंकारं च गरीयसः । स्नात्वाऽनश्नन्नहःशेषमभिवाद्य प्रसादयेत् ॥
“ ताडयित्वा तृणेनापि कण्ठे वाऽबध्य वाससा । विवादे वा विनिर्जित्य तमुपोष्य प्रसादयेत् ” ॥
**याज्ञवल्क्यः** ( प्रा. २९२ )—
५ “ गुरुं त्वंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः । बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम् ” ॥ इति

**गुरुपित्राद्यधिक्षेपप्रायश्चित्तम्** । पित्राद्यधिक्षेपे **स्कान्दे**—
“ पुत्रादिर्जनकं ज्येष्ठं गुरुं वापि न पीडयेत् । एकशब्देन नामोक्त्या त्वंकारं हुंकृतिं च वा ।
“ तद्दोषपरिहारार्थं नाचिकेतव्रतं चरेत् ॥
“ नाचिकेतः पुरा राजन् गुरुमुद्दालकं प्रति । परिभाष्य ततो गत्वा दृष्ट्वा यमपुरं महत् ॥
१० “ पुनर्गत्वा भुवः पृष्ठं पितरं प्रणिपत्य च । तद्वाक्येन ततः पश्चाद्देहशुध्यर्थमादरात् ॥
“ अपिबन्मण्डलं तत्र गवां क्षीरं दिने दिने । पीत्वा शुद्धिमनुप्राप्तो मण्डलाद्विप्रसत्तमः ॥
“ असकृत् गुर्वधिक्षेपे व्रतमेतच्चरेद्द्विजः । अथवा देहशुद्ध्यर्थं षडब्दं कृच्छ्रमाचरेत् ” ॥ इति ।
**वसिष्ठः** ( २१।२८ )—“ गुरोरलीकनिर्बन्धे कृच्छ्रं द्वादशरात्रं चरित्वा सचैलस्नातो गुरुप्रसादात्पूतो भवति ” ॥ इति । तदेतदमतिपूर्वे मतिपूर्वे सकृदनुष्ठाने वेदितव्यम् इति **माधवीये** ।
१५ **विष्णुः** (५४।१४)—“समुत्कर्षे गुरोरलीककनिर्बन्धे क्षीरेण पयसा वा मासं वर्तेत ” ॥ इति ।

**पतनीये समुद्रयानादौ प्रायश्चित्तम्** ।

पतनीयानां प्रायश्चित्तमाह—**बोधायनः** ( २।१।४१ )—
“ समुद्रयानं ब्रह्मस्वन्यासापहरणं भूम्यपां हरणमनृतवदनं सर्वापण्यैर्व्यवहरणं शूद्राभिगमनं[3] यश्च
“ शूद्रायामभिप्रजायते तदपत्यं च भवति तेषां निर्वेशः चतुर्थकालं मितभोजिनः स्युरपोभ्यपेयुः
२० “ सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपहन्ति पापम् ” इति । चतुर्थः कालो येषां तथाद्य दिवा भुक्त्वा श्वो रात्रौ भुञ्जते तथोक्ताः । तथा मितभोजिनः अमृष्टाशिनः । अपोभ्यपेयुः भूमिगतास्वप्सु स्नानं कुर्युः । सवनानुकल्पं त्रिषवणं स्थानासनाभ्यां तिष्ठेयुः । अहनि रात्रौ चासीरन् । एवं विहरन्तः कालं क्षिपन्तः एते त्रिभिर्वर्षैस्तत्पापमपनुदन्तीत्यर्थः । शूद्राभिगमने इदं महत्प्रायश्चित्तं ऋतूपगमने अपत्योत्पत्तौ द्रष्टव्यम्
२५ “वृषलीफेनपीतस्य निश्वासोपहतस्य च । तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते”॥ इति **स्मृतेः** ।

**दुर्जनसेवाप्रायश्चित्तम्** । दुर्जनसेवायां प्रायश्चित्तमाह—**देवलः**—
“ पिशुनश्च खलश्चैव मद्यपः कितवस्तथा । स्तेयी च दुर्जना एते सेवामेषां करोति यः ॥
“ पराकस्त्वेकदिवसे पक्षे तप्तमुदीरितम् । प्राजापत्यं ततो मासे वर्षे चान्द्रस्य भक्षणम् ॥
“ कृत्वा शुद्धिमवाप्नोति वर्षादूर्ध्वं पतत्यसौ ” ॥ इति ।

३० **शूद्रसेवाप्रायश्चित्तम्** । शूद्रसेवायां **बोधायनापस्तम्बौ** ( आप. १।९।१०।११; बौधा. २।१।४२ )—
“ यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः ॥
“ चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्ति पापम् ” ॥ इति । कृष्णवर्णः शूद्रः तदाज्ञाकरो भूत्वा वृत्त्यर्थं सेवमानो ब्राह्मणः त्रिभिर्वर्षैर्मितमेव चतुर्थकाले मितं भुञ्जानः त्रिषवणस्नायी
३५ एकदिनसेवाकृतं पापं हन्तीत्यर्थः । **बोधायनः** ( २।१।४४-४५ )—“ भैषज्यकरणं ग्रामयाजनं

---

१ ग–प्रणिपत्य । २ ग–र्वं । ३–‘ जननं ’ मुद्रितपाठः ।

रङ्गोपजीवनं नाट्याचार्यता गोमहिषीरक्षणं यच्चान्यदप्येवं युक्तं कन्यादूषणमिति। तेषां तु निर्वेशः पतितवृत्तिर्द्वौ संवत्सराविति" अन्यदप्येवं युक्तमिति अन्यदपि उपपातकमित्यर्थः।

**अशुचिकराणां प्रायश्चित्तम्।** **स एव** (२।१।४६–४८) "अथाशुचिकराणि। द्यूतमभिचारोनाहिताग्नेरुञ्छवृत्तिता समावृत्तस्य भैक्षचर्या तस्य चैव गुरुकुले वास ऊर्ध्वं चतुर्भ्यो मासेभ्यस्तस्य चाध्यापनं नक्षत्रनिर्देशश्चेति। तेषां तु निर्वेशो द्वादशमासान् द्वादशार्धमासान् ५ द्वादशद्वादशाहान् द्वादशषडहान् द्वादशत्र्यहान् द्वादशाहं षडहं त्र्यहमहोरात्रमेकाहमिति यथाकर्माभ्यासः" इति। द्वादशमासाद्येकाहान्तकालविकल्पः यथाकर्माभ्यासः तथा वेदितव्यः। बुद्धिपूर्वे सानुबन्धेऽभ्यासे च भूयांसं कालं प्रायश्चित्तं कुर्याद्विपरीतं विपर्यय इत्यर्थः।

**अभिचारशापादिप्रायश्चित्तम्।** **आपस्तंबः**–(१।१०।१९।१५–१६) "अभीचारानुव्याहारावशुचिकरावपतनीयौ पतनीयाविति **हारीतः**"॥ इति। अभिचारः श्येनेनेत्यादि। अनु- १० व्याहारः शापः। तौ ब्राह्मणविषये क्रियमाणावित्यर्थः। **स एव** (१।१०।२९।१७-१८)— "पतनीयवृत्तिस्त्वशुचिकराणां द्वादशमासान् द्वादशार्धमासान् द्वादशद्वादशाहान् द्वादशसप्ताहान् द्वादशत्र्यहान् द्वादशद्व्याहान् द्वादशाहं सप्ताहं त्र्यहद्व्यहमेकाहमिति"। अशुचिकराणां कर्मणां येषां प्रातिस्विकं प्रायश्चित्तं नोक्तं तेषामपि कर्मणां पतनीयेषु कर्मसु या वृत्तिः प्रायश्चित्तं सैव। शिष्टं स्पष्टम्। अशुचिकराणि **तेनोक्तानि** (१।७।२१।१२–१७)—"अथाशुचिकराणि शूद्र- १५ गमनमार्यस्त्रीणां प्रतिषिद्धानां मांसभक्षणं शुनो मनुष्यस्य च कुक्कुटसूकराणां ग्राम्याणां क्रव्यादसां मनुष्याणां मूत्रपुरीषप्राशनं शूद्रोच्छिष्टमपपात्रागमनं चार्याणामिति"। क्रव्यादसः गृध्राद्यः। शूद्रोच्छिष्टं भुक्तमशुचिकरम्। अपपात्राः प्रतिलोमस्त्रियः। **मनुः** (११।१९७–१९८,१९१)—
"व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च। अभिचारमहीनं च त्रिभिः कृच्छ्रैर्विशुध्यति॥
"शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः। संवत्सरं यवाहारस्तत्पापमपसेधति॥ २०
"येषां द्विजानां सावित्री नानूच्येत यथाविधि। तांश्चारयित्वा त्रीन् कृच्छ्रान्यथाविध्युपनाययेत्"॥

**याज्ञवल्क्यः** (प्रा. २८९)—
"त्रीन् कृच्छ्रानाचरेद्व्रात्ययाजकोऽभिचरन्नपि। वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतम्"॥ इति।

**पैठीनसिः**—'शूद्रयाजकः तद्द्रव्यत्यागात्पूतो भवति। प्राणायामसहस्रेषु दशकृत्वोऽभ्यस्तेष्विति॥

यत्तु **मनुराह**— २५
"पुरोधाः शूद्रवर्णस्य ब्राह्मणो यः प्रवर्तते। स्नेहादर्थप्रसङ्गाद्वा तप्तकृच्छ्रं विशोधनम्"॥ इति तदशक्तविषयम्। **पराशरः**—
"गृहीत्वा दक्षिणां यस्तु शूद्रस्य जुहुयाद्धविः। ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत्"॥ इति। जुहुयात् वैदिकैर्मन्त्रैः। "शूद्रस्तु ब्राह्मणो भवेत्" इति तत्कर्मफलप्राप्नोतीत्यर्थः।

**भृतकाध्यापनाध्ययनप्रायश्चित्तम्।** भृतकाध्यापनं निन्दति **शौनकः**— ३०
"वेदाक्षराणि यावन्ति नियुङ्क्ते त्वर्थकारणात्। तावतीर्भ्रूणहत्या वै लभते नात्र संशयः"॥ इति।

**व्यासोऽपि**—
"यो विप्रो भृतकं हृत्वा मासि मासि प्रचोदितम्। शिष्यानध्यापयेद्वेदं साक्षान्नारायणात्मकम्॥
"स वै नारायणद्रोही सर्वदा सूतकी भवेत्। अयोग्यो हव्यकव्येषु सर्वथा तं परित्यजेत्"॥ इति।

---

१ गघ–षी। २ क्ष–द्रामां। ३ ग–वृ।

तस्य प्रायश्चित्तमाह **जाबालिः**—

" अब्दं यो भृतकं हृत्वा वेदपाठं द्विजातये । तस्य चान्द्रत्रयं प्रोक्तमब्दमात्रप्रपूरणे ॥
" अब्दद्वयं नदेयस्तु हृत्वा मूल्यं द्विजन्मने । तस्य पापविशुद्ध्यर्थं प्रोक्तं चान्द्रचतुष्टयम् ॥
" अब्दत्रये चान्द्रषट्कं कुर्याद्देहविशुद्धये ।
५ " अत ऊर्ध्वं ब्रह्महन्ता ललाटे तापवर्जितः । ब्रह्महत्याव्रतं कुर्यात्कपालध्वजवर्जितः " ॥ इति ।

भृतकाध्ययने **व्यासः**—

" भृतकाध्यापितो यश्च भृतकाध्यापकश्च यः । अनुयोगप्रदानेन त्रीन् पक्षांस्तु पयः पिबेत् " ॥

**ब्रह्मोज्झप्रायश्चित्तम्** । ब्रह्मोज्झे **वसिष्ठः** ( २०।१२ )—" ब्रह्मोज्झः कृच्छ्रं द्वादशरात्रं चरित्वा पुनरुपयुञ्जीत वेदमाचार्यात् " इति । एतत्प्रामादिकत्यागविषयम् । नास्तिकतया त्यागे १० सुरापानसममिति **मनोर्मतम्** ।

**अनाश्रमवासे प्रायश्चित्तम्** । अनाश्रमवासे **हारीतः**—" अनाश्रमी संवत्सरं प्राजापत्यं चरित्वाऽऽश्रममुपगच्छेत् । द्वितीयेऽतिकृच्छ्रं तृतीये कृच्छ्रातिकृच्छ्रमत ऊर्ध्वं चान्द्रायणम्" इति । **गौतमः**—

" अग्निपूतो गृहस्थः स्यात्सोमयाजी विशेषतः । तयोर्यदि मृता भार्या तज्जन्म विफलं भवेत् ॥
१५ " अनाश्रमी द्विजो यस्तु यावज्जीवति भूतले । मासि मासि स कुर्वीत प्राजापत्यं विशुद्धये ॥
" अशक्तश्चेत्तथा कर्तुं कुर्याद्वा मृत्यनन्तरम् । मासि मासीह तावन्ति गणयित्वा तदात्मजः ॥
" ततः शुद्धिमवाप्नोति परलोकं च विन्दति " ॥

**पञ्चाशद्वत्सरादुपरि विवाहनिषेधः** । **स** एव—

" पञ्चाशद्वत्सरादूर्ध्वं न कार्यं पाणिपीडनम् । कलेर्युगस्य दुष्टत्वात् त्याज्यमाहुर्मनीषिणः ॥
२० " युवानं प्रेक्षते नारी स्वयं जीर्णापि सर्वदा । व्यभिचारात्कुलं नश्येत्कुलनाशात्कुलाङ्गनाः ॥
" भ्रश्यन्ति सङ्करो भूयात्सङ्करो नरकाय च " ॥ इति ।
" यस्तु सन्त्यज्य गार्हस्थ्यं वानप्रस्थो न जायते । परिव्राड्वापि मैत्रेय स नग्नः परिकीर्तितः "॥ इति **विष्णुपुराण**वचनमधिकारिविषयम् ।

**ऊढायाः पुनरुद्वाहे प्रायश्चित्तम्** । ऊढायाः पुनर्विवाहे **जाबालिः**—

२५ " पूर्वमुद्वाहितां कन्यां पिता भ्राता धनेच्छया । अन्यस्मै चेत्पुनर्दद्यात्पितरो यान्त्यधोगतिम् ॥
" सा कन्या पांसुला ज्ञेया तत्पुत्राः कुण्डसंज्ञिताः । एतद्दोषविशुध्यर्थं प्रायश्चित्तं समाचरेत् ॥
" दाता रामधनुष्कोट्यां प्रत्यहं स्नानमाचरेत् । वर्षमात्रेण संशुद्धो नान्यथा शुद्धिरिष्यते ॥
" तद्भर्ता तां परित्यज्य कुर्याच्चान्द्रायणत्रयम् । तस्योपनयनं भूयः शुद्धिमाप्नोति पौर्विकीम् ॥
" सा कन्या पूर्वकं चान्यं त्यक्त्वा चान्द्रायणं चरेत् । पुत्रोत्पादे तु पुत्राणां तस्यां च त्याग इष्यते"॥इति

३० **सगोत्राविविवाहे प्रायश्चित्तम्** । सगोत्रविवाहे **बोधायनः** ( २।१।३८ )—" सगोत्रां " चेदमत्योपयच्छेन्मातृवदेनां बिभृयात् । प्रजाता चेत् कृच्छ्राब्दपादं चरित्वा यन्म आत्मनो " मिन्दाभूत्पुनरग्निश्चक्षुरदादित्येताभ्यां जुहुयात् " इति । **कल्पसारे**—

" अमत्योढा सगोत्रा चेन्मातृवद्बिभृयात्तु ताम् । चान्द्रायणं चरित्वाऽन्यामुपयच्छेत कन्यकाम् ॥
" कृच्छ्राब्दपादं कुर्वीत प्रजाता यदि सा भवेत् । मिन्दाहुती द्वे जुहुयात्तस्यान्ते चरितव्रतः ॥

---

१ ग-वृ । २ ग-मृ ।

" तस्यां प्रसूतो निर्दोषः काश्यपो गोत्रतः स्मृतः ।
" ऊढा चेद्बुद्धिपूर्वं स्याद्गुरुतल्पव्रतं चरेत् । तस्यां प्रसूतश्चण्डालः सर्वकर्मबहिष्कृतः " ॥
**स्मृत्यर्थसारे**—
" यदि कश्चित् ज्ञानतस्तां कन्यामूढ्वोपगच्छति । गुरुतल्पव्रताच्छुद्धो गर्भस्तज्जोऽन्त्यतां व्रजेत् ॥
" भोगतस्तां परित्यज्य पालयेज्जननीमिव । अज्ञानाच्चैदैन्दवेन शुद्ध्येद्गर्भस्तु काश्यपः " ॥ इति । ५
**शातातपः**—
" समानप्रवरां कन्यां सगोत्रामुपयम्य च । उत्सृज्य तां ततो भार्यां मातृवत्परिपालयेत् ॥
" कृत्वा तस्यां समुत्सर्गमतिकृच्छ्रं विशोधनम् " इति । **देवलः**—
" समानगोत्रजामूढ्वा समानप्रवरां तथा ।
" यदि पुष्पवतीं गच्छेल्लोभात्कामातुरः सकृत् । मातृगामी स विज्ञेयः सर्वकर्मबहिष्कृतः ॥ १०
" गुरुतल्पव्रतं कुर्यान्मुष्कच्छेदविवर्जितम् । पुत्रोत्पत्तौ तयोः पुत्रा अन्त्यजत्वमवाप्नुयुः " ॥ इति ।

**परिवित्त्यादेः प्रायश्चित्तम्** । परिवेदनादौ **पराशरः** ( ४।२०–२१ )—
" परिवित्तिः परीवेत्ता च यया च परिविद्यते । सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥
"द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च । कृच्छ्रादिकृच्छ्रौ दातुस्तु होता चान्द्रायणं चरेत्"॥इति।
यत्र ज्येष्ठो नोद्वहति कनिष्ठश्च उद्वहति तत्र ज्येष्ठः परिवित्तिः कनिष्ठः परिवेत्ता कन्या परिवेदिनी १५
तस्याः पित्रादिर्दाता याजको विवाहहोमस्य कारयिता अत्र परिवित्तेः परिवेत्तुश्च द्वौ कृच्छ्रौ । यत्र
कुब्जादौ विषयविशेषे पूर्वमपवादा उक्ताः तत्र न प्रायश्चित्तापेक्षा । **बोधायनस्तु** (२।१।३९)—
" परिवित्तिः परिवेत्ता दाता यश्चापि याजकः । कृच्छ्रद्वादशरात्रेण त्रिरात्रेण विशुध्यति " ॥ इति ।
**शङ्खलिखितौ**—" परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहे भैक्षं चरेयुः " इति ।
अत्र ज्ञाताज्ञातभेदेन प्रायश्चित्तगौरवलाघवव्यवस्था । २०
प्रायश्चित्तानन्तरं परिवेत्तुः कर्तव्यमाह **वसिष्ठः** (२०।८)–"परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा
तस्मै दत्वा निर्वेश्य पुनस्तामेवोपयच्छेत् " ॥ इति । तस्मै ज्येष्ठाय निर्वेश्य पुनस्तामेवोद्वहेदित्यर्थः ।
अयमेव न्याय आधानव्युत्क्रमे भगिन्योर्विवाहव्युत्क्रमे चेति **माधवीये** ।

**उष्ट्रादियुक्तयानारोहणे प्रायश्चित्तम्** । उष्ट्रादियुक्तशकटाद्यारोहणे **मनुः** (११।२०१)—
" उष्ट्रयानं समारुह्य खरयानं च कामतः । स्नात्वा च विप्रो दिग्वासाः प्राणायामेन शुद्ध्यति" ॥ इति । २५
**याज्ञवल्क्यः** ( प्रा. २९१ )—
"प्राणायामं जले स्नात्वा खरयानोष्ट्रयानगः । नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम् "॥ इति।

**खराद्यारोहणे प्रायश्चित्तम्** । खराद्यारोहणे **मार्कण्डेयः**—
" खरमारुह्य विप्रोऽसौ योजनं यदि गच्छति । तप्तकृच्छ्रत्रयं कुर्याच्छुद्धिमाप्नोति वै द्विजः ॥
" उष्ट्रं च महिषं चैव ह्यनड्वाहं द्विजः सकृत् । आरुह्य योजनं गच्छेत्प्राजापत्यमुदीरितम् " ॥ इति । ३०
" अजं बस्तं समारुह्य पूर्ववद्यदि गच्छति । तत्र सान्तपनं प्रोक्तं शरीरस्य विशोधनम् ॥
" पुनः कर्म प्रकुर्वीत तेन शुध्येन्न संशयः " ॥ इति । पुनःकर्म पुनरुपनयनम् ।

**कारागृहवासप्रायश्चित्तम्** । कारागृहवासे **गौतमः**—
" बलाद्बन्दीकृतो यस्तु म्लेच्छचण्डालदस्युभिः ।
" कारागृहे मासमात्रमुषित्वा कायमाचरेत् । प्राजापत्यं च चान्द्रं च चरेत्संवत्सरोषितः " ३५

---

१ ग–समं । २ ग–ग । ३ क–वेत्तुः ।

**यमः**—"कारागृहाद्विनिर्गत्य प्रायश्चित्तं यथोदितम् । कृत्वा विप्रः पुनः कर्म कृत्वा शुद्धिमवाप्नुयात् ॥
" बलाद्बन्दीकृता नारी तत्रैव निवसेद्यदि । पक्षमासमृतुं चाब्दमुत्सृष्टा चेत्तदा पतिः ॥
" षष्टिभिर्मृत्तिकाभिश्च धृतशौचमनन्तरम् । कारयित्वा विधानेन स्नापयित्वा नदीजलैः ॥
" कारयेत्पूर्ववद्विप्रः प्रायश्चित्तमनुक्रमात् ॥
५ " अर्धमुक्तं तु नारीणां प्रायश्चित्तं विशोधनम् । तस्या दोषनिवृत्तिः स्यात् जनयोगेन[1] हीयते ॥
" अतस्तत्पोषणं कुर्यात्संसर्गादीन् न कारयेत् । तत्रैव गर्भसंपत्तौ परित्यागो विधीयते " ॥ इति ।

**कुग्रामवासप्रायश्चित्तम्** । कुग्रामवासे **मरीचिः**—
" श्रोत्रियश्च तटाकादिस्तृणं पर्णं तथेन्धनम् । बान्धवः स्वकुलीनाश्च विद्या चैवोपकारिणी ॥
" न सन्ति यत्र ग्रामे तु स कुग्राम इतीरितः ॥
१० " तत्र ग्रामे द्विजो यस्तु हव्यकव्यपराङ्मुखः । एकत्र दिवसे तिष्ठन्महाचान्द्रायणं चरेत् " ॥

**दुर्देशगमने प्रायश्चित्तम्** । दुर्देशगमने **बोधायनः** ( १।१।२९ )—
" सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति " ॥
प्रत्यन्तवासिनः चण्डालादिवासप्रदेशान् । **स एव** ( १।१।३० )—
" पद्भ्यां स कुरुते पापं यः कलिङ्गान्प्रपद्यते । ऋषयो निष्कृतिं तस्य प्राहुर्वैश्वानरं हविः " ॥ इति ।

१५ **श्वशृगालादिदंशने प्रायश्चित्तम्** । श्वादिदंशे **याज्ञवल्क्यः** ( आ. २७७ )—
" पुंश्चलीवानर[2]खरैर्दष्टः श्वोष्ट्रादिवायसैः । [3]प्राणायामं जले कृत्वा घृतं प्राश्य विशुध्यति " ॥
**मनुः** ( ११।१९९ )—
" श्वशृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च । नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति ॥
एतन्नदीस्नानादेरप्युपलक्षणम् । तथा च **बोधायनः** ( १।५।१२६ )—
२० " शुना दष्टस्तु यो विप्रो नदीं गत्वा समुद्रगाम् । प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥
" सुवर्णरजताभ्यां वा गवां शृङ्गोदकैश्च वा । नवैर्वा कलशैः स्नात्वा सद्य एव शुचिर्भवेत् " ॥ इति ।
**हारीतः**—"श्वानो वा क्रोष्टुको वापि नारी वा यदि वानरः । आखुर्नकुलमार्जारवायसग्राम्यसूकराः ॥
" एतैर्दष्टे द्विजस्याङ्गे प्रायश्चित्तं कथं भवेत् ॥
" स्नानं कृत्वा सचेलं तु विप्राणामनुशासनात् । प्रोक्षणीभिः त्रिभिर्वाग्भिः कारयेन्मार्जनं द्विजः ॥
२५ "प्राणायामत्रयं कुर्यात् दद्याद्गोभ्यस्तृणं नरः । सह द्विजैश्च भुक्तेन शुध्यते नात्र संशयः " ॥ इति ।
**अङ्गिराः**—
" ब्रह्मचारी शुना दष्टस्त्र्यहं सायं पयः पिबेत् । गृहस्थस्तु द्विरात्रं वा एकाहं वाऽग्निहोत्रवान् ॥
" नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् । स्यादेतत्त्रिगुणं वक्त्रे मस्तके तु चतुर्गुणम् ॥
"अव्रती सव्रती वापि शुना दष्टस्तथा द्विजः । दृष्ट्वाऽग्नीन् हूयमानांस्तु सद्य एव शुचिर्भवेत् " ॥ इति ।
३० **पराशरः** ( ५।१–९ )—
" वृकश्वानशृगालाद्यैर्दष्टो यस्तु द्विजोत्तमः । स्नात्वा जपेत्स गायत्रीं पवित्रां वेदमातरम् ॥
" गवां शृङ्गोदकस्नानं महानद्योस्तु सङ्गमे । समुद्रदर्शनाद्वापी शुना दष्टः शुचिर्भवेत् ॥
" वेदविद्याव्रतस्नातः शुना दष्टो द्विजो यदि । सहिरण्योदकैः स्नात्वा घृतं प्राश्य विशुध्यति ॥

---

१ ग–वादो । २ क्ष–यस । ३ गघ–श्च तिसृभिः ।

" सव्रतस्तु शुना दष्टः यस्त्रिरात्रमुपावसेत् । घृतं कुशोदकं पीत्वा व्रतशेषं समापयेत् ॥
" अव्रतः सव्रतो वापि शुना दष्टो भवेत् द्विजः । प्रणिपाताद्भवेत्पूतो विप्रैश्चक्षुर्भिरीक्षितः ॥
" शुनाघ्रातावलीढस्य नखैर्विलिखितस्य वा । अद्भिः प्रक्षालनं प्रोक्तमग्निना चोपचूलनम् ॥
" शुना तु ब्राह्मणी दष्टा जम्बुकेन वृकेण वा । उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥
" कृष्णपक्षे यदा सोमो न दृश्येत कदाचन । या दिशं व्रजते सोमस्तान्दिशं वाऽवलोकयेत् ॥ ५
"असद्ब्राह्मणके ग्रामे शुना दष्टो भवेद्द्विजः । वृषं प्रदक्षिणीकृत्य सद्यः स्नात्वा विशुध्यति "॥ इति । वृकशुनोरारण्यकत्वग्राम्यत्वाभ्यां भेदः । शृगालो जम्बुकः । आदिशब्देन वराहादया गृह्यन्ते । तैर्दष्टः स्नात्वा गायत्र्यष्टशतं जपेत् । जपसंख्याविशेष उशनसा दर्शितः ' दंष्ट्र्यादिदष्टे गायत्र्यष्टशतं प्राणायामशतं वा " इति । एतच्चासमर्थविषयम् । समर्थस्तु गोशृङ्गोदकस्नानादिकमाचरेत् । तत्र गोशृङ्गोदकस्नानं नाम शृङ्गपूरितेनोदकेन गायत्र्या शतवारमभिमन्त्रितेन सेचनम् ' गोशृङ्गेण शतं १० स्नानम् " इति हारीतस्मरणात् । शृङ्गोदकस्नानसङ्गमस्नानसमुद्रदर्शनानामधममध्यमोत्तमाङ्ग-भेदेन वा दंशतारतम्येन वा व्यवस्था । वेदाध्ययनं वा सौम्यप्राजापत्यादिव्रतानि वा समाप्य स्नातो वेदविद्याव्रतस्नातः । स यदि शुना दष्टः तथा हिरण्यमुदके निधाय तेनोदकेन स्नात्वा घृतं प्राश्य विशुध्यति । तत्रापि ब्राह्मणश्चेत् गायत्रीं शतकृत्वो जपेत् । तदाह बोधायनः—
" वेदविद्याव्रतस्नातः शुना दष्टस्तु ब्राह्मणः। शतपर्यायमावृत्य गायत्रीं शुद्धिमाप्नुयात् "॥ इति । १५ चान्द्रायणादिव्रतेन सहितः सव्रतः । स त्रिरात्रमुपोष्य चतुर्थेऽह्नि घृतं प्राश्य कुशोदकं च पीत्वा पश्चाद्व्रतशेषं समापयेत् । सव्रताव्रतावुभावपि विप्रान् प्रणिपत्य तैर्निरीक्षितौ यथोक्तप्रायश्चित्ता-चरणेन पूतौ भवतः। यदा ब्राह्मणी श्वादिभिर्दष्टा तदा सा रात्रावुदितान् ग्रहान् सोमादीन्नक्षत्राणि कृत्तिकादीनि दृष्ट्वा शुद्धा स्यात् । सोमदर्शनासंभवे तदवस्थितियोग्यां दिशां वा पश्येत् । तच्च दर्शनं पञ्चगव्यप्राशनस्य चोपलक्षणम् । अत एवाङ्गिराः— २०
" ब्राह्मणी तु शुना दष्टा सोमे दृष्टिर्निपातयेत् । समुद्रदर्शनाद्वाऽपि शुना दष्टा शुचिर्भवेत् ॥
" सोममार्गेण सा पूता पञ्चगव्येन शुध्यति "॥ इति । सोमादर्शनासंभवे समुद्रदर्शनं दिगवलोकनं वा कार्यम् । यत्र ब्राह्मणा न सन्ति तत्र ब्राह्मणप्रणिपातनिरीक्षणयोः स्थाने वृषभप्रदक्षिणं द्रष्टव्यम् । एतेषु वचनेषु यत्र यत्र प्रायश्चित्तबाहुल्यं तत्रोत्तमाङ्गविषयत्वं दंशनावृत्तिविषयत्वं चोहनीयम् । ब्रह्मचारिगृहस्थाग्निहोत्रिषूत्तरोत्तरं तपोबाहुल्यात्प्रायश्चित्तह्रास इति माधवीये । २५

**शरीरे क्रिम्युत्पत्तौ प्रायश्चित्तम्** । शरीरे क्रिमिजनने **शातातपः**—
" ब्राह्मणस्य व्रणद्वारे यदा संपद्यते क्रिमिः । प्रायश्चित्तं तदा कार्यमिति शातातपोऽब्रवीत् "॥ इति ।
"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । स्नात्वा दत्वा च भुक्त्वा च क्रिमिदष्टा शुचिर्भवेत्"॥ इति ।
**बोधायनः** ( १।५।१२३ )—
" ब्राह्मणस्य व्रणद्वारे पूयशोणितसंभवे । क्रिमिरुत्पद्यते तत्र प्रायश्चित्तं कथं भवेत् ॥ ३०
"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । त्र्यहं स्नात्वा च पीत्वा च क्रिमिदष्टः शुचिर्भवेत् "॥
एतच्च नाभेरधोभागे द्रष्टव्यम् । उपरिभागे तु भानुराह । नाभेरुपरिचेद्भानुराह—
" नाभिकण्ठान्तरोद्भूते व्रणे चोत्पद्यते क्रिमिः । षड्रात्रं तु तदा प्रोक्तं प्राजापत्यं शिरोव्रणे " ॥

---

१ क्ष–र्निरीक्षितः। २ ग–षं। ३ क–वानरा। ४ क्ष–स्थो। ५ गघ–त्र्यहं स्नात्वा च पीत्वा च।

**दुर्ब्राह्मणगृहभोजने प्रायश्चित्तम्**। अभोज्यभोजने प्रायश्चित्तमुच्यते। तत्र दुर्ब्राह्मणगृहे भोजने **भरद्वाजः**—

"निराचारस्य विप्रस्य निषिद्धाचरणस्य च। अन्नं भुक्त्वा द्विजः कुर्याद्दिनमेकमभोजनम्"॥ इति। तदशक्तौ **पराशरः** (१२।५४)—

५ "सदाचारस्य विप्रस्य तथा वेदान्तवेदिनः। भुक्त्वाऽन्नं मुच्यते पापादहोरात्रान्तरान्नरः"॥ इति। एतदनभ्यासविषयम्। अभ्यासे तु **स** एव (११।४३)—

"परपाकनिवृत्तस्य परपाकरतस्य च। अपचस्य च भुक्त्वाऽन्नं द्विजश्चान्द्रायणं चरेत्"॥ इति। तेषां लक्षणं **स** एवाह (११।४५-४७)—

"गृहीत्वाऽग्निं समारोप्य पञ्चयज्ञान्न निर्वपेत्। परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्तितः।

१० "पञ्चयज्ञान् स्वयं कृत्वा परान्नेनोपजीवति। सततं प्रातरुत्थाय परपाकरतस्तु सः।

"गृहस्थधर्मा यो विप्रो ददातिः परिवर्जितः। ऋषिभिर्धर्मतत्त्वज्ञैरपचः परिकीर्तितः"॥ इति। ददातिरन्नदानपरः। तद्वर्जितः स्वयमेव यो भुङ्क्ते सोऽपच इत्युच्यते। तस्य निन्दा प्रत्यक्षश्रुता-वाम्नायते (उदकशान्तिः)—'नार्यमणं पुष्यति नो सखाऽयं केवलाघो भवति केवलादी'॥ **शातातपबृहस्पती**—

१५ "यो हि हित्वा विवाहाग्निं गृहस्थ इति मन्यते। अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः॥

"वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद्द्विजः। प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति"॥ इति। वृथापाके यत्प्रायश्चित्तं तदेव ब्राह्मणनिन्दकादावपि द्रष्टव्यम्। निन्दावचनेन सह पाठात्। तथा च **व्यासः**—"पङ्क्तिभेदी वृथापाकी नित्यं ब्राह्मणनिन्दकः। आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः"॥इति। **शौनकः**—"कनिक्रदं जपेन्मन्त्रं दशवारं यदा तदा। वेदविक्रयिणो गेहे भुक्त्वा पापात्प्रमुच्यते"॥ इति।

२० **हारीतः**—

"यदन्नं प्रतिलोमस्य शूद्रजस्योत्तमस्त्रियाम्। महापातकिनां चैव यदन्नं स्त्रीकृतघ्नयोः॥

"आरूढपतितस्यैव सगोत्राभर्तुरेव च। पाषण्डानाश्रितानां च यतेश्चैव तथैव च॥

"अतिकृच्छ्रं चरेद्भुक्त्वा प्रमादाद्ब्राह्मणः सकृत्। मत्या चान्द्रायणं कुर्यादामं चेदर्धमेव च॥

"तद्धस्तभोजने वापि त्रिगुणं सह भोजने। चतुर्गुणं तदुच्छिष्टे पानीये त्वर्धमेव च॥

२५ "कृच्छ्राब्दपादमुद्दिष्टमभ्यासात् ज्ञानभोजने। मत्याभ्यासे तथा कुर्यात् त्रिंशत्कृच्छ्रं द्विजोत्तमः"॥ उत्तमस्त्री ब्राह्मणी। तस्यां प्रातिलोम्येन शूद्रादुत्पन्नश्चण्डालः। सत्यपि सामर्थ्ये नास्तिक्येन किञ्चि-दप्याश्रममप्राप्तः अनाश्रितः।

**राजाद्यन्नभोजनफलानि। सुमन्तुः**—

"राजान्नं तेज अदत्ते शूद्रान्नं ब्रह्मवर्चसम्। आयुः सुवर्णकारान्नं यशश्चर्मावकर्तिनः[1]।

३० "कारुकान्नं प्रजा हन्ति बलं निर्णेजकस्य च। गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति॥

"रूपं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम्। विष्ठा वार्धुषिकस्यान्नं शस्त्रविक्रयिणो मलम्॥

"एवमेते त्वभोज्यान्नाः[2] क्रमशः परिकीर्तिताः॥

"भुक्त्वाऽतोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम्। मत्या भुक्त्वाऽऽचरेत्कृच्छ्रं रेतोविण्मूत्रमेव च"॥इति।

१ क-पृथक्। २ ग-नः। ३ ग-कर्ति।

**विष्णुः** ( ४८।२१ )—"गणकगणिकास्तेनगायकान्नानि भुक्त्वा सप्तरात्रं पयसा वर्तेत। तक्ष्णोऽन्नं चर्मकर्तुश्च श्वपाकवार्धुषिककदर्यदीक्षितबद्धनिगलाभिशस्तपाषण्डानां च पुंश्चलीदांभिकचिकित्सकलुब्धकक्रूरोच्छिष्टभोजिनां चावीरस्त्रीसुवर्णकारसपत्नपतितानां च क्रतुधर्मसोमविक्रयिणां च शैलूषतन्तुवायकृतघ्ननिषादरङ्गावतारिवेदशस्त्रविक्रयिणां च श्वजीविशौण्डिकतैलिकचेलनिर्णेजकानां च रजकानां च रजस्वलासहोपपतिवेश्मनां च भ्रूणघ्नावेक्षितमुदक्यासंस्पृष्टं पतत्रिणावलीढं शुना स्पृष्टं गोघ्रातं च कामतः पादस्पृष्टमवक्षतं च मत्तक्रुद्धातुराणां चानर्चितं वृथामांसं च त्रिरात्रमुपवसेत्" इति। त्रिरात्रोपवासः अकामकृतसकृद्भोजनविषयः। ५

अत्रैव विषये **लिखितोऽपि**—

"भुक्त्वा वार्धुषिकस्यान्नं सव्रतस्याव्रतस्य वा। शूद्रस्य च तथा भुक्त्वा त्रिरात्रं स्यादभोजनम्"॥ इति।

अस्मिन्नेव विषये अशक्तस्य **पराशरः** ( ११।४-५ )— १०

"शूद्रान्नं सूतकस्यान्नमभोज्यस्यान्नमेव च। शङ्कितं प्रतिषिद्धान्नं शूद्रोच्छिष्टं तथैव च॥

"यदि भुक्तं तु विप्रेण चाज्ञानादापदापि वा। ज्ञात्वा समाचरेत्कृच्छ्रं ब्रह्मकूर्चं तु पावनम्"॥ इति।

अज्ञाने आपदि च ब्रह्मकूर्चमेव ज्ञाने प्राजापत्यमिति योज्यम्।

अकामकृतसकृद्भोजनविषये अशक्तस्य **हारीतः**—

"मृतसूतकशूद्रान्नं सदोषेणापि संस्कृतम्। शङ्कितं प्रतिषिद्धान्नं विद्विषोऽन्नमथापि वा॥ १५

"यदि भुञ्जीत विप्रो यः प्रायश्चित्तं कथं भवेत्। एकरात्रोपवासश्च गायत्र्यष्टशतं भवेत्।

"प्राशयेत्पञ्चभिर्मन्त्रैः पञ्चगव्यं पृथक् पृथक्। एतेन शुध्यते विप्रो ह्यन्यैश्चाभोज्यभोजनैः"॥

अकामकृताभ्यासे तु **विष्णुनोक्तं** सप्तरात्रं पयोव्रतम्। **मनुस्तु** यवयवागूपानमाह ( ११।१५२ )—

"अभोज्यानां तु भुक्त्वाऽन्नं स्त्रीशूद्रोच्छिष्टमेव च। जग्ध्वा मांसमभक्ष्यं च सप्तरात्रं यवान् पिबेत्"॥इति।

कामकृताभ्यासे **हारीतोक्तं** चान्द्रायणम्। तथा **शंखोऽपि**— २०

"शूद्रान्नं ब्राह्मणो भुक्त्वा तथा रङ्गावतारिणः। चिकित्सकस्य क्रूरस्य तथा स्त्रीमृगजीविनः॥

"अभिशस्तस्य चोरस्य अवीरायाः स्त्रियस्तथा। चर्मकारस्य वैणस्य क्लीबस्य पतितस्य च॥

"रुक्मकारस्य तक्ष्णश्च रजकस्य च वार्धुषेः। कदर्यस्य नृशंसस्य वेश्यायाः कितवस्य च॥

"गणान्नं भूमिपालान्नं मृगजीविश्ववृत्तिनाम्। सौनिकान्नं सूतकान्नं भुक्त्वा मासव्रतं चरेत्॥

"गणान्नं सूतकान्नं च भुक्त्वा मासव्रतं चरेत्"॥ मासव्रतं चान्द्रायणमित्यर्थः। २५

शुक्तादिभक्षणे **मनुः** ( ११।१५३ )—

"शुक्तानि च कषायांश्च भुक्त्वाऽमेध्यान्यपि द्विजः। तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यधः"॥

**आपस्तम्बः** ( १।९।२७।३-४ )—'अभोज्यं भुक्त्वा नैष्पुरीष्यन्तत्सप्तरात्रेण वाप्यत' इति॥

अभोज्यमांसादिभक्षणे निष्पुरीषभावः कर्तव्यः। यावदुदरं निष्पुरीषं भवति तावदुपवस्तव्यम्। तच्च सप्तरात्रेणावाप्यते। येषां त्रिरात्रेण नैष्पुरीष्यं तेषां तावदेव शुद्धिः॥ तथा च ३०

**गौतमः** ( २३।२३-२४ )-

"अभोज्यभोजने निष्पुरीषभावस्त्रिरात्रमभोजनं सप्तरात्रं वा"॥ इति।

**व्यतीपातादिभोजने प्रायश्चित्तम्**। व्यतीपातादिभोजने **देवलः**—

"व्यतीपाते यदन्नं च महापुरुषभोजनम्। कर्मण्यरिजने भुक्तिर्दशाहे बलिभोजनम्॥

"भूतप्रेतपिशाचानां यदन्नं परिकल्पितम्। कलुषं वर्जनीयं तत् ब्रह्मराक्षसभोजनम्॥ ३५

---

१ ग-च। २ ग-पिशुनानृतवादि। ३ ग-तुन्न। ४ क्ष-अव्रतस्याव्रतस्य। ५ ग-पीत्वा।

" एतेष्वदंस्तु यो विप्रो धनलोभपरायणः । तदानीं मृत्युमाप्नोति जीवेद्वा पापकार्यसौ ॥
" तत्र दोषोपशान्त्यर्थं प्रायश्चित्तमिदं स्मृतम् ।
" प्राजापत्यद्वयं कृत्वा पुनस्संस्कारपूर्वकम् । पञ्चगव्यं पिबेत्पश्चाच्छुद्धो भवति भूतले " ॥

**अयुतसहस्रभोजने प्रायश्चितम्** । अयुतसहस्रभोजनादौ **मार्कण्डेयः**—

५ " अयुते वा सहस्रे वा द्विजो ब्राह्मणभोजने । जिह्वाचापल्यतः क्षिप्रं भुञ्जीतापः पिबेत्तु वा ॥
" पक्षं वा मासमथ वा भुक्त्वा विप्रो निरन्तरम् । कृच्छ्रं पराकं चान्द्रं च कृत्वा शुद्धिमवाप्नुयात् ॥
" वर्षोपरीह शूद्रत्वमवाप्नोतीति निश्चितम् " ॥

**देवलः**—" अयुते वा सहस्रे वा नानावर्णसमागमे । पतितक्लीबवैडालव्रात्यतस्करपूरिते ॥
" कुण्डगोलकसंधाते नटगायकसङ्कुले । पाषण्डजनसंसर्गे सर्वपातकिसङ्कुले ॥
१० " भाण्डोच्छिष्टस्वयंपाके स्त्रीजनैरुपशोभिते । यो विप्रो लोभमन्विच्छन्नभुञ्जीयात्कदाचन " ॥

सत्रभोजनेऽप्येवम् । दीर्घसत्रे तु **देवलः**—
" वर्षद्वयं वा वर्षं वा यो वा को वा द्विजो भुवि । सङ्कल्प्य भोजयेद्विप्रान् तद्दीर्घं सत्रमुच्यते ॥
" विप्रस्तत्र न भुञ्जीयात् पूर्ववत् दुष्टसंगमात् । पक्षं वा मासमथवा भुक्त्वा निष्कृतिमाचरेत् ॥
" पक्षभुक्तौ पराकं स्याच्चान्द्रं स्यान्मासभोजने ।

१५ शूद्रसत्रे तु **स एव**—
" शूद्रसत्रे न भुञ्जीत प्राणैः कण्ठगतैरपि । भुञ्जन्नरकमासाद्य वायसत्वमवाप्नुयात् ॥
" पक्षे मासे ऋतावब्दे भोजने तु यथाक्रमम् । यावकं तप्तकृच्छ्रं च प्राजापत्यमथैन्दवम् ॥
" कृत्वा शुद्धिमवाप्नोति द्विजः पापक्रियाक्रमात् " इति ।

**शूद्रादिगृहे स्वयंपाकादिना भोजनेऽपि प्रायश्चित्तम्** । शूद्रादिगृहे स्वयं पक्त्वा भोजने
२० **पराशरः**—
" शूद्रालये वा वैश्या वा गृहे वाऽन्नं तदर्पितम् । पक्त्वा भुक्त्वा स पापीयान्महान्तं नरकं व्रजेत् ॥
" तद्दोषपरिहारार्थं प्रायश्चित्तमिदं स्मृतम् ॥
" परेद्युर्वा तदानीं वा वापयित्वा शिरोरुहान् । स्नानं कृत्वा ततः पश्चात्तप्तकृच्छ्रं समाचरेत् ॥
" पञ्चगव्यं पिबेत्पश्चाच्छुद्धो भवति नान्यथा " ॥ इति ।

२५ **सङ्घान्नभोजने प्रायश्चित्तम्** । सङ्घान्नभोजने **गौतमः**—
" सङ्घीभूय द्विजा ये तु मार्गे तीर्थगमेऽपि वा । स्वद्रव्यमेलनं कृत्वा पक्त्वा भुक्त्वैकदेशतः ॥
" ते सर्वे नरकं यान्ति शूद्रतुल्या न संशयः । तेषामिदं मुनिप्रोक्तं प्रायश्चित्तं विशुद्धिदम् ॥
" एकरात्रे पञ्चगव्यं द्विरात्रे यावकं पिबेत् । प्राजापत्यं त्रिरात्रे च पक्षे चान्द्रायणं स्मृतम् ॥
" मासे तु शूद्रतुल्याः स्युः स्त्रीणामर्धं समीरितम् " ॥

३० **क्रीतान्नभोजने प्रायश्चित्तम्** । क्रीतान्नभोजने **देवलः**—
" देवालयेषु मार्गेषु ग्रामेषु नगरेषु च । विप्रः क्रीतान्नभोक्ता चेत्तदा नरकमाप्नुयात् " ॥

**महाभारतेऽपि**—
" क्रीतान्नं देवतागारे ग्रामे वा पत्तने पथि । यो भुङ्क्ते पूर्वजो ज्ञानान्नरकं स समाप्नुयात् " ॥

---
१ ग-कीर्णे । २ गघ-क्षयात् । ३ क्ष-ह्णे ।

हेमाद्रौ—
" विप्रः कण्ठगतप्राणः क्रीतान्नं यदि भुञ्जते। ग्रामे वा नगरे तीर्थे महादेवालयेऽपि वा॥
" स गत्वा नरकं घोरं नानायोनिषु जायते। तस्मात्तस्य विशुध्यर्थं प्रायश्चित्तमुदीरितम्।
" त्रिरात्रभोजने कार्यं पक्षे तप्तं समाचरेत्। महातप्तं तु मासे च वत्सरे चान्द्रमुच्यते॥
" अतःपरं शूद्रतुल्यो विद्वानपि न संशयः। विप्रस्त्रीणामेतदर्धं यतीनां द्विगुणं भवेत्॥ ५

**यागान्नभोजने प्रायश्चित्तम्।** यागान्नभोजने **कण्वः**—
" यज्ञेषु पशुबन्धेषु अन्नमत्ति यदा द्विजः। स वै नरकमाप्नोति स बिडालसमो भवेत्॥
" भुङ्क्ते यदि वपाहोमात्प्राक् पापं महदश्नुते। पुनस्तस्योपनयनं प्राजापत्येन शुध्यति॥
" वपायागात्परं विप्रो यो भुङ्क्ते दीक्षितालये। प्राजापत्यं विशुध्यर्थं मुनिभिः परिकीर्तितम्"॥ इति।
कात्यायनः— १०
" ऋत्विजां च परस्त्रीणां भोक्तॄणां यागसद्मनि। उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति॥
" सुवासिनी चेत्तद्भर्तुः पिबेत्पादोदकं तथा। विधवा वपनं कृत्वा प्रपिबेद्ब्रह्मकूर्चकम्॥
" यतिश्च ब्रह्मचारी च पूर्वं यागान्नभक्षणे। चान्द्रं कुर्याद्वपाहोमात्परं कार्यं समाचरेत्"॥

**अस्नात्वा भोजने प्रायश्चित्तम्।** अस्नात्वा भोजने **गौतमः**—
" अस्नात्वा भोजनं विप्रो नीरोगः कुरुते यदि। स मलाशी सदा ज्ञेयः सर्वकर्मबहिष्कृतः। १५
" श्राद्धकालेषु चान्द्रं स्यात् ग्रहणे तद्द्वयं स्मृतम्। पञ्च पर्वसु तप्तं स्यादितरत्र तु यावकम्॥
" द्विगुणं विधवानां तु यतीनां ब्रह्मचारिणाम्"॥

**अशुचिकालभोजने प्रायश्चित्तम्। शातातपः**—
" मूत्रोच्चारं द्विजः कृत्वा शौचहीनः कथंचन। मोहाद्भुक्त्वा त्रिरात्रं स्यान्मत्या सांतपनं चरेत्॥
" मूत्रयित्वा व्रजन्मार्गे स्मृतिभ्रंशाज्जलं पिबेत्। अहोरात्रोषितः स्नात्वा जुहुयात्सर्पिषा हविः"॥ २०
व्याघ्रः—
" अस्पृश्यस्पर्शनं कृत्वा यदा भुङ्क्ते गृहाश्रमी। अकामतस्त्रिरात्रं स्यात् षड्रात्रं कामतश्चरेत्"॥
प्रजापतिः—" अस्नात्वा तु यदा भुङ्क्ते पिण्डं दत्वा पितुर्व्रती॥
" स्पृष्ट्वा शवमुदक्यां वा चण्डालं सूतिकां तथा। अकामतस्त्रिरात्रं स्यान्मत्या सांतपनं चरेत्"॥
पिण्डं प्रेतपिण्डम्। २५

**पर्युषितान्नभोजने प्रायश्चित्तम्।** पर्युषितभोजने **स एव**—
" जले निधाय पूर्वेद्युर्यदन्नं पिठरोद्धृतम्[1]। तत्पर्युषितसंज्ञं स्याद्भुक्त्वा चान्द्रायणं चरेत्॥
" त्रिरात्रं पञ्चरात्रं वा भुक्त्वा पर्युषितं द्विजः। तस्योपनयनं भूयश्चान्द्रायणमथाचरेत्॥
" हिङ्गुजीरकसंमिश्रं तिन्तिणीरसवेष्टितम्। दुर्गन्धरहितं यत्तु भोक्तव्यं द्विजपुङ्गवैः॥
" दध्ना घृतेन तैलेन यदन्नं संस्कृतं भवेत्। दुर्गन्धरहितं भोज्यमन्यथा चान्द्रमुच्यते"॥ ३०

**ओदनवटकमाषवटकादिभक्षणे प्रायश्चित्तम्। गालवः**—
" ओदनान्निर्मितं वस्तु शुष्कीभूतं यदा भवेत्। अभोज्यं भक्षयित्वा[2] तद्यावकं कृच्छ्रमाचरेत्॥
" दुर्गन्धरहितं भक्ष्यं तथा पर्युषितं च यत्। वटकं माषसंभूतं शष्कुल्यादि तथैव च॥
" तैलादिपाकहीनं च भक्ष्यमाहुर्मनीषिणः॥

---

१ क—रे स्थितम्। २ क्ष—न।

" माषसंभूतवटकान् शष्कुलीं च तथाविधाम्। निष्कारणतया विप्रो न भुञ्जीत कदाचन॥
" पित्रर्थं देवकार्यार्थं पक्त्वा भुक्त्वा न दोषभाक्। वृथा तानीह भक्षित्वा यावकं कृच्छ्रमाचरेत् "॥

**परमान्नकृसरभक्षणे कालनियमः।** **देवलः**—

" परमान्नं च कृसरं वृथा पक्त्वा द्विजोत्तमः। भुञ्जीत यदि छर्दित्वा उपोष्य रजनीं ततः॥
५ " पञ्चगव्यं पिबेत्पश्चाच्छुद्धो भवति नान्यथा।
" रवौ धनुः समायाते गृहे कन्या रजस्वला। पितृदेवनिमित्तं च परमान्नं प्रशस्यते "॥ इति।

**गौतमः**—

" धनुर्मासे गृहे कन्या यदि स्यात्प्रथमार्तवा। तथैव देवयात्रायां कृसरान्नं न दोषभाक्॥
" पितृकार्येषु सर्वेषु दैवे बन्धुसमागमे। पक्त्वा भोज्यं तदन्नं स्यात् प्रभूतक्षीरसंभवम्॥
१० " निमित्तेन विना भुक्त्वा दिनमेकमभोजनम्। पञ्चगव्यं पिबेत्पश्चाच्छुद्धो भवति निश्चितम् "॥

कन्या दुहिता भगिनी स्नुषा च। धनुर्मासे च दुहितरि भगिन्यां स्नुषायां च प्रथमार्तवायां पितृदेवकार्ये बन्धुसमागमे च पायसकृसरान्नभोजने न दोषः। उक्तनिमित्तादन्यत्र दिनमुपवासः पञ्चगव्यप्राशनं च कर्तव्यमित्यर्थः।

**व्रात्यकुष्ठ्याद्यन्नभोजने प्रायश्चित्तम्।** व्रात्यान्नभोजने **देवलः**—

१५ "व्रात्यान्नं यदि कुष्ठ्यन्नं भुङ्क्ते विप्रः क्षुधातुरः। एकादश्यन्नभुक् चैव शुद्ध्यै चान्द्रायणं चरेत्॥
" कुण्डगोलकयोरन्नं परिवित्तेस्तथैव च। परिवेत्तुर्यदन्नं च भुक्त्वा चान्द्रायणं चरेत्॥
" देवार्चकस्य यो भुङ्क्ते तथा गणकवेश्मनि। उभौ तौ पापिनौ प्रोक्तौ प्रायश्चित्तमथार्हतः॥
" एकरात्रे पञ्चगव्यं द्विरात्रे यावकं स्मृतम्। मासमात्रे पराकं स्यादब्दे चान्द्रमुदीरितम्॥
" ततः परं तत्समः स्यात् त्रीणामर्धमुदीरितम्।
२० " यतेराराधने भूत्वा यत्यन्नं भोजनोपरि। दम्पत्योर्भुक्तशिष्टं यत् भुक्त्वा चान्द्रायणं चरेत्॥
" उल्लङ्घितं पादहतं बिडालादिविमर्दितम्। देवपूजाविहीनं यद्वैश्वदेवविवर्जितम्।
" देवालयेषु यद्भुक्तं यदन्नं मूल्यसंभवम्। शीतीकृतं यदन्नं च शूर्पेण वदनेन वा।
" तुषपाषाणसंयुक्तं फलीकरणमिश्रितम्। असाक्षिकं यदन्नं च यदन्नं जीवतण्डुलम्॥
" एतद्भुक्त्वा विशुध्यर्थं पराकं कृच्छ्रमाचरेत् "॥ इति।
२५ भोक्तुरागमनात्पूर्वं भोजनपात्रे यत्परिवेषितं तदसाक्षिकम्।

**अन्तःशवग्रामभोजने प्रायश्चित्तम्।** अन्तःशवग्रामभोजने **संवर्तः**—

" यत्र ग्रामे तु कुणपो विप्रो वर्तेत तत्र वै। पाकयज्ञं तथा भुक्तिं जलाहरणमेव च॥
" न कुर्यात्तावता विप्रो यावन्नान्यत्र नीयते। कुणपेनाश्रिते ग्रामे विप्रो भुक्त्वा स पापकृत्॥
" प्राजापत्यं तु कुर्वीत पञ्चगव्यमतः परम्। द्विजानां क्षीरपाने तु न दोषो गृहमेधिनाम् "॥

३० **उपरागभोजने प्रायश्चित्तम्।** उपरागभोजने **मनुः**—

" सूर्योपरागे यो भुङ्क्ते तस्य पापं महत्तरम्। तस्य पापविशुध्यर्थं तप्तकृच्छ्रमुदीरितम्॥
" चन्द्रोपरागकाले तु भुक्त्वा कायं समाचरेत्। उभयोर्भोजने विप्रः पुनः संस्कारमर्हति "॥

**मरीचिरपि**—

" सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम्। चन्द्रग्रहे तु यामांस्त्रीन् भुक्त्वा पापं समश्नुते॥

---

१ ग–भा। २ ग–ञ्च। ३ क्ष–गृह।

" इमं धर्मं परित्यज्य यो विप्रस्त्वन्यथा चरेत् । तस्योपनयनं भूयस्ततं सांतपनं स्मृतम् " ॥
सूर्यग्रहे तप्तम् । अन्यत्रान्यदित्यर्थः । उभयोः पुनःसंस्कारे इत्यर्थः ।

**भिन्नपात्रभोजने प्रायश्चित्तम्** । भिन्नपात्रादिभोजने **गालवः**—
" स्वर्णपात्रं तथा कांस्यं राजतं भिन्नमेव यत् । तत्र भुक्त्वा चरेत्कृच्छ्रमन्यथा दोषमाप्नुयात् ॥
" येषु पर्णेषु यो भुङ्क्ते यदा तत्र भुजिं चरेत् । पर्णान्तरं न भुञ्जीत तदा चैन्द्रवमाचरेत् ॥ ५
**गौतमोऽपि**—
" एकजातीयपर्णेषु कांस्ये चाभिन्नभाजने । भोजनं कुरुते यस्तु संपूर्णायुर्भवेदिह " ॥

**रजस्वलापक्वान्नभोजने प्रायश्चित्तम्** । रजस्वलापक्वभोजने **मार्कण्डेयः**—
" अज्ञात्वा पुष्पिणी नारी कृत्वा वै पचनक्रियाम् । पश्चाच्छुष्कं रजो दृष्ट्वा यदा तस्मादपक्रमेत् ॥
" तां दृष्ट्वा भाषणं कृत्वा भुक्तवन्तो यदि द्विजाः । चान्द्रायणेन शुद्धाः स्युः पञ्चगव्येन चेत्तथा ॥ १०
" पुनः कर्म प्रकुर्वीरन् भवेयुः पापिनोऽन्यथा " ॥ इति ।

**निषिद्धदिने द्विर्भोजने ब्रह्मयज्ञाकरणे च प्रायश्चित्तम्** ।
निषिद्धदिने द्विर्भोजने **स एव**—
" अर्कद्विपर्वरात्रौ च मृताहात्पूर्ववासरे । तथा चतुर्दश्यष्टम्योः संक्रान्तौ च महोत्सवे ।
" पितरौ व्याधिनाक्रान्तौ गुरूणां दुःखसंभवे । श्रोत्रिये मरणं प्राप्ते महाराजनिपातने । १५
" न द्विवारं समश्नीयान्नश्येत् द्विर्वारभोजनात् " ॥
" न द्विवारं समश्नीयात् विप्रो धर्ममनुस्मरन् । तस्य पापस्य शुध्यर्थं सहसा निष्कृतिं चरेत् ॥
" पञ्चगव्येन शुद्धः स्यात् विप्रो द्विर्वारभोजने " ॥ इति ।
एतदनभ्यासविषयम् । अभ्यासे तु भोजनप्रकरणोक्तं द्रष्टव्यम् । **स एव**—
" वैश्वदेवं देवतार्चा नित्यहोमं तथाविधम् । ब्रह्मयज्ञं पितॄणां च तर्पणं द्विजवल्लभः ॥ २०
" त्यक्त्वा भुक्त्वा तथा विप्रः सुरापीत्युच्यते बुधैः । तप्तकृच्छ्रं चरेत्पापी तस्मात्पापात्प्रमुच्यते ॥
" पञ्चगव्येन पूतात्मा नान्यथा शुद्धिरिष्यते " ॥ इति । एतदसकृत्करणविषयम् । सकृत्करणे तु
" वेदोदितानां नित्यानां कर्मणां समतिक्रमे । स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् " ॥ इति
**मनूक्त** ( ११।२०३ ) एकरात्रोपवासो द्रष्टव्यः ।

**स्वस्वकाले गर्भाधानाद्यकरणे प्रायश्चित्तम्** । स्वस्वकाले गर्भाधानाद्यकरणे **हेमाद्रौ**— २५
" स्नातवत्यामृतौ पत्न्यां चतुर्थे पञ्चमेऽह्नि वा । कृत्वाऽभ्युदयिकं प्रातस्तद्रात्रौ मन्त्रपूर्वकम् ॥
" गर्भाधानं ततः कुर्यात् प्रतिगर्भं न तत् स्मृतम् । अन्यथा गर्भघाती स्याद्यथा जारः तथैव सः ॥
" प्राजापत्यत्रयं कुर्यात् द्वितीये पुनरार्तवे ।
" सीमन्तपुंसवनयोः स्वकालाकरणे सति । प्राजापत्यद्वयं कृत्वा शुद्धो भवति नान्यथा " ॥ इति ।
" जातकर्म न कुर्वीत नास्तिक्याद्यदि पूर्वजः । प्राजापत्यद्वयं कुर्यान्नास्ति चौले तथा व्रते ॥ ३०
" एकादशे द्वादशे वा नामकर्म विधीयते । अतिपत्तौ पिता कुर्यात् प्राजापत्यद्वयं ततः ॥
" अन्नप्राशनचौलादिकाले कुर्याद्व्रतेऽपि वा ।
" मुख्यकालपरित्यागादन्नप्राशनकर्मणः । व्रतबन्धे तु गौणं स्यात्प्राजापत्यमुदीरितम् ॥
" देशकालानुरोधेन यदि चौलं विलम्ब्यते । प्राजापत्यद्वयं कृत्वा तत्पापं परिशोधयेत् ॥

१ गघ—त्कार्यं । २ क्ष—च । ३ ग—श्रु ।

" पञ्चमाब्दं विलङ्घ्यांशु शिशोरक्षरसंग्रहे । कायिकं तत्र कर्तव्यमन्यथा दोषमाप्नुयात् ॥
" यदि कामादष्टमाब्दं लङ्घयित्वा चरेद्व्रतम् । नवमे तप्तकृच्छ्रं स्याद्दशमे तच्च कायिकम् ॥
" एकादशे द्वादशे वा व्यतिक्रम्यैन्दवं चरेत् । तत आ षोडशात्कुर्यादैन्दवत्रयमेव च ॥
" अजिनं मेखलां दण्डं ब्रह्मचारी यदि त्यजेत् । प्राजापत्यं पक्षमात्रे मासे तप्तं समाचरेत् ॥
५ " अब्दमात्रपरित्यागे कुर्याच्चान्द्रायणव्रतम् ।
" अग्निकार्यं ब्रह्मयज्ञं देवर्षिपितृतर्पणम् । अकृत्वा वत्सरे चान्द्रं तत्परं पतितो हि सः " ॥

**उष्णोदकस्नाने प्रायश्चित्तम्** । उष्णोदकस्नानादौ **देवलः**—

" कूपोदकेन सप्ताहं स्नानमुष्णेन वारिणा । मृत्तिकाभिर्विना शौचं कृत्वा सप्ताहमेव च ॥
" प्राजापत्यं विशुध्यर्थं चरेत् पूतो भवेद्द्विजः । पञ्चगव्यं ततः पीत्वा शुद्धो भवति नान्यथा "॥ इति ।

१० **यज्ञोपवीतादिना विना भोजने प्रायश्चित्तम्** । यज्ञोपवीतादिनाविना भोजने **स** एव—

" विना यज्ञोपवीतेन शिखया च द्विजोत्तमः । उच्छिष्टो यदि मोहात्मा पापकृत्स भवेद्द्विजः ॥
" उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति " ॥ इति । शिखया शिखाबन्धेनेत्यर्थः ।

**शिखोपवीतभ्रंशे प्रायश्चित्तम्** । शिखानाशे तु **गौतमः**—

" शिखां विना द्विजश्रेष्ठः कण्ठे गोवालरोमभिः । भूत्वा तद्दोषशान्त्यर्थं प्राजापत्यं समाचरेत् ॥
१५ " यावच्छिखा पुनर्जाता तावत्कण्ठेण धारयेत् । ब्रह्माविष्णुमहेशाख्या ब्रह्मसूत्रस्य तन्नव ॥
" एकस्मिंस्त्रुटिते विप्रः पुनर्धृत्वा नवं मुदा । नित्यकर्म प्रकुर्वीत त्रुटितं निक्षिपेज्जले ॥
" ब्रह्मसूत्रं तु वामांसात् भ्रष्टं स्याच्चतुरङ्गुलम् । प्राणायामत्रयं कृत्वा स्वस्थाने पूर्ववत् क्षिपेत् ॥
" मणिबन्धे यदा भ्रष्टं प्राणायामसहस्रकम् । कृत्वा शुद्धिमवाप्नोति वामहस्तादधोगतम् ॥
" यत्सूत्रं सहसा त्यक्त्वा धारयेदन्यसूत्रकम् ।
२० "जले भ्रष्टं परित्यज्य सहस्रं वेदमातरम् । जप्त्वा शुद्धिमवाप्नोति नान्यथा शुद्धिरीरिता "॥ इति ।

**भोजनकाले क्षुतादौ प्रायश्चित्तम्** । भोजनकाले क्षुतादौ **विष्णुः**—

" द्विजो भोजनकाले तु जृम्भणं क्षुतमेव च । अपानवायुमोक्षं वा कुर्वन्निष्कृतिमाचरेत् ॥
" अन्यो दोर्भ्यां जलं धृत्वा तस्य मूर्धनि विन्यसेत् । पृच्छेत जन्मसदनं दिवा वा यदि वा निशि ॥
" क्षुते च जृम्भणे चैव कृत्वैवं स विशुध्यति ।
२५ " अपानवायोरुत्सर्गे जातेऽन्नं परिवर्जयेत् । लोभेन भुक्त्वा तद्भक्तं स्नात्वा कायं समाचरेत् " ॥

**शिवनिर्माल्यभोजने प्रायश्चित्तम्** । शिवनिर्माल्यभोजने **देवलः**—

" शम्भोर्निवेदितं भक्तं तत्तीर्थं शाकमेव वा । विप्रः सकृन्न भुञ्जीयात् भुक्त्वा तप्तं समाचरेत्" ॥

**मार्कण्डेयः**—

"शिवे निवेदितं भक्तं प्रत्येकं देवतां विना । द्विजोऽज्ञानाद्यदा भुङ्क्ते तप्तकृच्छ्रं समाचरेत्"॥ इति ।

३० सालग्रामादिसाहित्ये **जाबालिः**—

" शिवे विष्ण्वादिभिर्देवैर्वेष्टिते यत्समर्पितम् । तद्भुक्त्वा विप्रवर्योऽसौ न भवेद्दोषभाग्जनः " ॥

**हारीतः**—

"सालग्रामादिभिः शम्भोर्वेष्टितस्य यदर्पितम् । तद्भोक्तव्यं द्विजैर्नित्यं तत्तोयं च पिबेद्द्विजः"॥ इति ।

फलाधिक्यमाह **योगयाज्ञवल्क्यः**—

" शिवे निवेदितं भक्तं सालग्रामादिवेष्टिते । तद्भक्तभोजने चान्द्रं कृतवान्नात्र संशयः ।
३५ " अन्यथा मांसतुल्यं स्यात्तत्तोयमसृजासमम् " ॥ इति ।

---

१ ग—द्व्या । २ ग—जाबालिः । ३ ग—देवलः । ४ ग—र्णेन । ५ ग—जनम् ।

**पत्न्या सहभोजने प्रायश्चित्तम्** । पत्न्या सहभोजने **देवलः**—

"द्विजः कामातुरो यस्तु पत्न्या सह यदान्नभुक् । पश्चाच्चान्द्रायणं कृत्वा शुद्धिमाप्नोति पौर्विकीम्"॥ इति। **गालवः**—"एकयाने समारोहमेकपात्रे तु भोजनम् । विवाहे पथि यात्रायां कृत्वा विप्रो न दुष्यति ॥
"अन्यथा दोषमाप्नोति पश्चाच्चान्द्रायणं चरेत् । अभ्यासे द्विगुणं चैव कृत्वा शुद्धिमवाप्नुयात्"॥
**गौतमः**—" पिताऽनुजस्य पुत्रस्य तयोः प्रीतिं समुद्वहन् । ५
"निक्षिपेत्कवलं तत्र न दोषस्तस्य भोजने । ताभ्यां सह न भुञ्जीत भुक्त्वा दोषमवाप्नुयात्"॥ इति ।

**नीलवस्त्रधारणनिषेधः** । नीलवस्त्रादिधारणे **आपस्तम्बः**—

" नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥
" रोमकूपे यदा गच्छेद्रसो नील्यास्तु कस्यचित् । त्रिवर्णेषु तु मासान्त्यं तप्तकृच्छ्रं विशोधनम् ॥
" पालनं विक्रयं चैव तद्वृत्त्या तूपजीवनम् । पतनं तु भवेद्विप्रः त्रिभिः कृच्छ्रैर्व्यपोहति ॥ १०
" स्नानं दानं तपो होमः स्वाध्यायः पितृतर्पणम् । वृथा तस्य महायज्ञा नीलीसूत्रस्य धारणात् ॥
" नीलीमध्ये तु गच्छेद्यः प्रमादाद्ब्राह्मणः क्वचित् । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥
" नीलीदारुर्यदा भिन्द्याद्ब्राह्मणस्य शरीरकम् । शोणितं दृश्यते यत्र द्विजश्चान्द्रायणं चरेत् ॥
" स्त्रीणां क्रीडार्थसंभोगे शयनीयं न दुष्यति ।
" नीलरक्तेन वस्त्रेण यदन्नमुपजीव्यते । दातारं नोपतिष्ठेत भोक्ता भुञ्जीत किल्बिषम् । १५
" कम्बले पट्टवस्त्रे च नीलीरागो न दुष्यति "॥ नीलीवस्त्रं धृत्वा भोजने **देवलः**—
" नीलीवस्त्रं तु तच्चिह्नं धृत्वा कर्म करोति यः । स विप्रस्तु न कर्मार्हस्तत्कर्म विफलं भवेत् ॥
" एकस्मिन् दिवसे भुक्त्वा धृत्वा रक्तमयं पटम् । कुर्याद्देहविशुध्यर्थं यावकं मुनिचोदितम् ॥
" अभ्यासे तु पराकं स्यात् वत्सरे चान्द्रमुच्यते"॥ इति । तच्चिह्नं वस्त्रान्ते मध्ये वा नीलतन्तुभिश्चिह्नितमित्यर्थः । **गौतमः**— २०
" नीलीमयं पटं धृत्वा विप्रस्तच्चिह्नमेव वा । कृत्वा कर्माणि भुक्त्वा वा न तत्कर्मफलं लभेत् ॥
" भोजने मांसभुग्विप्रः सर्वथा परिवर्जयेत् "। **देवलः**—
"नीलवस्त्रं तु तच्चिह्नं धृत्वा ज्ञानात्तु यश्चरेत् । स विप्रस्त्वशुचिर्नित्यं न कर्मार्हो भवेदिह "॥ इति।

**पराम्नभोजने प्रायश्चित्तम्** । परान्नभोजने **शौनकः**—

" यस्मिन्वयं जपेन्मन्त्रं शतवारं दिने दिने । सदा परान्नभोक्ता च विमुच्येत हि किल्बिषात् " ॥ २५
**यमः**—
" न पङ्क्तौ विषमं दद्यान्न याचेन्न च दापयेत् । प्राजापत्येन कृच्छ्रेण मुच्यते कर्मणस्ततः "॥ इति ।

**नवश्राद्धादिभोजने प्रायश्चित्तम्** । श्राद्धभोजने **विष्णुः**—

" प्राजापत्यं नवश्राद्धे पादोनं त्वाद्यमासिके । त्रैपक्षिके तदर्धं स्यात्पञ्चगव्यं चै मासिके "॥ इति ।
एतच्चापद्विषयम् । अनापदि तु— ३०
" चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मिश्रके । एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते "॥
इति हारीतोक्तं द्रष्टव्यम् ।

---

१ क्ष–म्र । २ क्ष–तः । ३ कगघ–गालवः । ४ क्ष–श्च । ५ ग–द्वि ।

'प्राजापत्यं तु मिश्रक' इति आद्यमासिकविषयम्। ऊनमासिकादिषु तु पादोनप्राजापत्यादीनि कर्तव्यानि। तदुक्तं **चतुर्विंशतिमते**—
"प्राजापत्यं नवश्राद्धे पादोनं त्वाद्यमासिके। त्रैपक्षिके तदर्धं स्यात् द्वौ पादौ मासिके ततः॥
"पादोनं कृच्छ्रमुद्दिष्टं षण्मासे चाब्दिके तथा। त्रिरात्रं चान्यमासेषु प्रत्यब्दं चेदहः स्मृतम्"॥ इति।
५ अत्र 'प्राजापत्यं नवश्राद्ध' इत्ययमंश आपद्विषयः। अनापदि चान्द्रायणम्। तथा **मरीचिः**—
"नग्नश्राद्धं नवश्राद्धमाशौचाभ्यन्तरे द्वयम्। तत्रामं प्रतिगृह्याशु महारौरवमश्नुते॥
"नग्नश्राद्धे नवश्राद्धे चान्द्रायणमुदीरितम्॥
"आद्यश्राद्धे तथा चान्द्रं सपिण्डीप्रेतभोजने। चान्द्रायणं पराकं वा कुर्यात्तद्दोषशान्तये"॥ इति।
'प्राजापत्यं तु मिश्रक' इत्येतदावृत्ताद्यमासिकविषयम्। तत्र चान्द्रायणं महैकोद्दिष्टविषयम्। तद-
१० नावृत्तौ तु चान्द्रायणत्रयं कार्यम्।
"आद्यमासिकमेकश्चेद्भुङ्क्ते ब्राह्मात्स हीयते। चान्द्रायणत्रयं कृत्वा कूष्माण्डैर्जुहुयात्ततः॥
"पुनः कर्म प्रकुर्वीत ततः पूतो भवेद्द्विजः"॥ इति **स्मृतेः**। यत्तु **शङ्खवचनम्**
"चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः। पक्षत्रये तु कृच्छ्रं स्यात् षण्मासे कृच्छ्र एव तु॥
"आब्दिके पादकृच्छ्रं स्यात् एकाहः पुनराब्दिके"॥ इति। अत्र यत्पराकादिविधानं तत्सर्पादि-
१५ हतविषयम् आपङ्क्तेयविषयं च।
"चण्डालादुदकात्सर्पात् ब्राह्मणाद्वैद्युतादपि। दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम्॥
"पतनानशनैश्चैव विषोद्बन्धनतस्तथा। भुङ्क्ते यः षोडशश्राद्धे कुर्यादिन्दुव्रतं द्विजः॥
"आपाङ्क्तेयान्यदुद्दिश्य श्राद्धमेकादशेऽहनि। ब्राह्मणस्तत्र भुक्त्वाऽन्नं शिशुचान्द्रायणं चरेत्॥
"मासश्राद्धे तथा भुक्त्वा तप्तकृच्छ्रेण शुध्यति। संकाल्पिते तथा भुक्त्वा त्रिरात्रं क्षपण स्मृतम्"॥ इति
२० **भारद्वाजेन** प्रायश्चित्तविशेषाभिधानात्।

**श्राद्धभोजने ब्रह्मचारिणः प्रायश्चित्तम्।** ब्रह्मचारिणस्तु **बृहद्यमो** विशेषमाह—
"मासिकादिषु योऽश्नीयात् असमाप्तव्रतो द्विजः। त्रिरात्रमुपवासोऽत्र प्रायश्चित्तं विधीयते॥
"प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति"॥ इदमज्ञानविषयम्। ज्ञानपूर्वके तु **स एव**—
"मधु मांसं तु योऽश्नीयाच्छ्राद्धे सूतक एव वा। प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत्"॥ इति।
२५ **क्षत्रियादिश्राद्धभोजने प्रायश्चित्तम्।** क्षत्रियादिश्राद्धभोजने **चतुर्विंशतिमते**—
"चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः। त्रैपक्षिके सांतपनं कृच्छ्रं मासद्वये स्मृतम्॥
"क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम्। वैश्यस्यार्धाधिकं प्रोक्तं क्षत्रियात्तु मनीषिभिः॥
"शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयम्।
"सार्धं चान्द्रायणं मासे त्रिपक्षे त्वैन्दवं स्मृतम्। मासद्वये पराकं स्यादूर्ध्वं सान्तपनं स्मृतम्"॥ इति।
३० यत्तु **उशनसोक्तम्**
"दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः। ततः सन्ध्यामुपासीत शुध्येत्तु तदनन्तरम्"॥ इति
तदनुक्तप्रायश्चित्तश्राद्धविषयम्।

**नान्दीश्राद्धभोजने प्रायश्चित्तम्।** संस्काराङ्गश्राद्धभोजने **व्यासः**—
"प्रवृत्ते चूडाहोमे तु प्राङ्नामकरणात्तथा। चरेत्सान्तपनं भुक्त्वा जातकर्मणि चैव हि॥

---

१ ग-दा। २ गघ-नि। ३ क्ष-निमित्त।

"अतोऽन्येषु तु भुक्त्वान्नं संस्कारेषु द्विजोत्तमः। नियोगादुपवासेन शुध्यते नित्यभोजनात्"॥ इति।
सीमन्तोन्नयनादिषु **धौम्यो** विशेषमाह—
"**ब्रह्मौदने च सोमे च** सीमन्तोन्नयने तथा। जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्"॥ इति।
**ब्रह्मौदनाख्यं** कर्माग्न्याधानाङ्गभूतम्। यत्तु **भारद्वाजेनोक्तम्**—
"भुक्तश्चेत्पार्वणश्राद्धे प्राणायामान् षडाचरेत्। उपवासस्त्रिमासादिवत्सरान्तं प्रकीर्तितम्"॥ ५
एतदप्यापद्विषयम्। अनापद्यधिकप्रायश्चित्तस्योक्तत्वात्। आमश्राद्धे सर्वत्रार्धम्। "आमश्राद्धे भवेदर्धम्" इति **षट्त्रिंशन्मते**ऽभिधानात्।

**श्राद्धशिष्टान्नभोजननिषेधः**। श्राद्धशिष्टान्नभोजनं प्रतिषेधति **देवलः**—
"अमायां पैतृकश्राद्धे मासिश्राद्धे महालये।
"श्राद्धे च षण्णवत्याख्ये सपिण्डीकरणे तथा। मासिकेषु तथा विप्रो न कुर्याच्छेषभोजनम्"॥ १०
**महाभारते**—
"श्राद्धकर्मणि भोक्तारो भोक्तारो यज्ञकर्मणि। श्राद्धशिष्टान्नभोक्तारस्ते वै निरयगामिनः॥
"सगोत्राणां सकुल्यानां न दोषः शिष्टभोजने। पुत्रिणामन्यगोत्राणां विधवानां तु दुष्यति"॥
**जाबालिः**—
"श्वशुरस्य गुरोर्वापि मातुलस्य महात्मनः। एतेषां श्राद्धशिष्टान्नं भुक्त्वा दोषो न विद्यते॥ १५
"पित्रोश्च ब्रह्मनिष्ठस्य ज्येष्ठभ्रातुश्च ज्ञानिनः। पैतृकेषु न भोक्तव्यं विधवानां तु सर्वदा॥
"विप्रस्त्वन्यकुले श्राद्धे कुर्याच्चेच्छेषभोजनम्। प्राजापत्यं विशुद्धिः स्यात् ज्ञातीनां तु न दोषभाक्॥
"व्रतिनां च स्वपित्रादौ न दोषः शिष्टभोजने। विधवा केशवपनं कृत्वा तप्तं समाचरेत्॥
"यतिश्च ब्रह्मचारी च पराकं कृच्छ्रमाचरेत्। संन्यासी वपनं कृत्वा लक्षं च प्रणवं जपेत्"॥ इति।
**चन्द्रिकायां**वनेकस्मृतिवचनाभिधानपूर्वकं श्राद्धशिष्टान्नभोजनं न दोषावहमित्युक्तम्। तच्च २० प्रतिपादितमधस्तात्। **हेमाद्रौ** तु विशेषवचनमुदाहृत्य श्राद्धशिष्टान्नभोजने प्रायश्चित्तं चाभिहितम्। अत्र निषेधस्य प्राबल्यात् श्राद्धशिष्टान्नभोजने प्रायश्चित्तोपदेशात् शिष्टाचारबाहुल्याच्च तद्वर्जनमेव युक्तमित्याहुः।

चौलाद्यन्नभोजने **देवलः**—
"चौलकर्मणि सीमन्ते मुहूर्ताद्भोजने परम्। सुरापानसमं प्रोक्तमतो नेच्छन्ति सूरयः"॥ २५
**गौतमः**—"सीमन्ते पुंसवे चैव चौले कर्मणि यो द्विजः। असगोत्रस्तदन्नादः सुरापीत्युच्यते बुधैः"॥
**मार्कण्डेयः**—
"चौले कर्माणि सीमन्ते पुंसवे योऽसगोत्रजः। मुहूर्ताद्रूर्ध्वभुक्पापी सुरापानमवाप्नुयात्॥
"प्रायश्चित्तं द्विजैः प्रोक्तमत्र शिष्टान्नभोजने। मुहूर्तात्परतस्तप्तं तत्पूर्वं भोजनं चरन्॥
"जप्त्वा शुद्धिमवाप्नोति सहस्रं वेदमातरम्। स्त्रीणामर्धं यतीनां च व्रतिनां चान्द्रमुच्यते॥ ३०
"चौलकर्मणि पूर्वत्रापरत्र च समं भवेत्"॥ **स्मृत्यन्तरे** च—
"चौलोपनयने चैव सीमन्ते पुंसवे तथा। ऋतूत्सवेऽप्यहःशेषं भुक्त्वा चान्द्रायणं चरेत्"॥
अहःशेषमिति वचनात् रात्रौ तद्गृहभोजने नैतत् प्रायश्चित्तम्। उच्छिष्टभोजनादीनां प्रायश्चित्तमाह्निकपरिच्छेदे भोजनप्रकरणे निरूपितम्। तत एवावधार्यम्।

---

१ क्ष-रु। २ क्ष-सौ। ३ ग-श्री। ४ क्ष-ति। ५ कग-+न। ६ ग-निषेध। ७ पृ. ४३१

अनुक्तप्रायश्चित्तेषु शङ्खलिखितौ—
" क्रयविक्रयदुष्टभोजनप्रतिग्रहेषु अनुद्दिष्टप्रायश्चित्तेषु सर्वेषु चान्द्रायणं प्राजापत्यं वा "॥ इति ।
मनुः ( ११।१६० )—
"अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता । अज्ञातभुक्तमुद्गार्यं शोध्यं वाप्याऽशु शोधनैः "॥
५ स्मृत्यन्तरे तु—
" भक्ष्याभक्ष्याण्यशेषाणि ब्राह्मणानां विशेषतः । तत्र शिष्टा यथा ब्रूयुस्तत्कर्तव्यमिति स्मृतम् "॥

**अविक्रेयविक्रये प्रायश्चित्तम्** । अविक्रेयविक्रये हारीतः—" गुडतिलपुष्पमूलफलपक्वान्नविक्रये सोमलाक्षालवणमधूनां तैलक्षीरतक्रदधिघृतगन्धचर्मवाससामन्यतमविक्रये चान्द्रायणं तथोर्णाकेशकेसरिभूधेनुवेश्माश्मशस्त्रविक्रये च मत्स्यमांसास्थिशृङ्गनखशुक्तिविक्रये तप्तकृच्छ्रं १० हिङ्गुगुग्गुलुहरितालमनःशिलाञ्जनगैरिकलाक्षालवणमणिमुक्ताप्रवालवैणवमृन्मयेषु च आरामतटाकोपवनपुष्करिणीसुकृतविक्रये त्रिषवणस्नाय्यधःशायी चतुर्थकालाहारो दशसहस्रं जपेद् गायत्रीं वत्सरेण पूतो भवति हीनमानोन्मानोन्मापनसंकरसंकीर्णविक्रये च " इति ।

चतुर्विंशतिमते—
" सुराया विक्रयं कृत्वा चरेत्सौम्यचतुष्टयम् । लाक्षालवणमांसानां चरेच्चान्द्रायणत्रयम् ॥
१५ " मध्वाज्यतैलसोमानां चरेच्चान्द्रायणद्वयम् । पयःपायसापूपानां चरेच्चान्द्रायणव्रतम् ॥
" दध्याज्येक्षुरसानां च गुडखण्डादिविक्रये । सर्वेषां स्नेहपक्वानां पराकं तु समाचरेत् ॥
" सिद्धान्नविक्रये विप्रः प्राजापत्यं समाचरेत् । उपवासं तु तक्रस्य नक्तं काञ्चनविक्रये ॥
" पूगीफलानि मञ्जिष्ठां राजखर्जूरमेव च । एतेषां विक्रये कृच्छ्रं पनसस्य दिनद्वयम् ।
" कदलीं नारिकेलं च नारङ्गं बीजपूरकम् । एतेषां पादकृच्छ्रं स्यात् जम्बीरादेस्तथैव च ॥
२० " कस्तूरिकादिगन्धानां विक्रये कृच्छ्रमाचरेत् । कर्पूरादेस्तदर्धं स्याद्द दिनं हिंगवादिविक्रये ॥
" तिलानां वि यं कृत्वा प्राजापत्यं समाचरेत् । यज्ञार्थं कृषिजातानां दानलब्धस्य विक्रये ॥
" रक्तपीतानि वस्त्राणि कृष्णाजिनमथापि वा । एतेषां विक्रये कृच्छ्रं गर्गस्य वचनं यथा ॥
" गोविक्रयं द्विजः कुर्याल्लाभार्थं धनमोहितः । प्राजापत्यं प्रकुर्वीत गजानां त्वैन्दवं स्मृतम् ॥
" खराश्वाजादिकानां च करभाणां च विक्रये । पराकं तत्र कुर्वीत शुनि द्विगुणमाचरेत् ॥
२५ " नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणं व्रतम् । द्विगुणं पुरुषाणां च व्रतमाहुर्मनीषिणः ॥
" चान्द्रायणं प्रकुर्वीत एकाहं वेदविक्रये । अङ्गानां तु पराकं स्यात् स्मृतीनां कृच्छ्रमाचरेत् ॥
" इतिहासपुराणानां चरेत्सांतपनं द्विजः । रहस्यपाञ्चरात्राणां कृच्छ्रं तत्र समाचरेत् ॥
" गाथानां नीतिशास्त्राणां प्राकृतानां तथैव च । सर्वासामेव विद्यानां पादकृच्छ्रं समाचरेत् "॥ इति ।

नारदः—" तण्डुलांश्च तिलान्माषान् फलपुष्पगुडाद्यपि । नागवल्लीदलं पूगपर्णं कर्पूरमेव च ॥
३० " कस्तूरीं कुङ्कुमं मूलं मुद्गं दधि घृतं पयः । कृष्णाजिनं च रुद्राक्षं ब्रह्मसूत्रं कमण्डलुम् ॥
" ताम्रं कांस्यं तथा वस्त्रं कम्बलं रोचनं तथा । तिन्तिणीं लवणं मूलं पक्वमन्नं द्विजो यदि ॥
"विक्रयित्वा तु यो जीवेत् स तु शूद्रो न संशयः । एतानि विक्रयित्वा तु हव्यकव्यानि नाचरेत्॥
" एतानि विक्रयित्वा तु प्राजापत्यं समाचरेत् । धनस्य संग्रहार्थं तु द्विगुणं कृच्छ्रमाचरेत् ॥
" विप्रस्तु पक्षमात्रं च गोरसं विक्रयेयदि । तस्य देहविशुध्यर्थं तप्तकृच्छ्रमुदीरितम् ॥
३५ " मासमात्रं विक्रयित्वा चरेच्चान्द्रायणव्रतम् । ऋतुद्वयं विक्रयित्वा मण्डलं यावकं चरेत् ॥

---

१ ग–नादि । २ ग–सोमायनं । ३ ग–अिक । ४ गघ–पूगं चूर्णं ।

" ऋतुत्रयं विक्रयित्वा ब्रह्महन्ता भवेद् ध्रुवम्। षण्मासं गोरसं पक्कं पीत्वा शुद्धिमवाप्नुयात्॥
" लवणं पक्कमन्नं च यदि मासं तु विक्रयेत्। तस्यैव निष्कृतिरियं यावकं वत्सरं चरेत्॥
" तस्योपनयनं भूयः कर्तव्यं शुद्धिमिच्छता "॥
**कूर्मपुराणे**—"अश्वधेनुमनुष्याश्च रासभः कुञ्जरस्तथा। कन्या नारी च मेषश्च पुस्तकं ब्रह्मसूत्रकम्॥
" लवणं पललं चर्म लशुनं गृञ्जनं तथा। पिप्पली च मरीचाश्च हरिद्राश्च लवङ्गिकाः॥ ५
" औषधानि च यावन्ति मत्स्यकुक्कुटसूकराः। हिङ्गुजीरकवस्तूनि ताम्रं कांस्यादिकं तथा॥
"एतानि मूल्यैः कृत्वा तु स्वल्पैर्वापि ततोऽधिकैः। विक्रयित्वाऽत्मभरणं कुर्याद्यदि स पापभाक्॥
" मृत्वा नरकमासाद्य क्रिमिरूपे पतत्यधः। तस्मादेतद्विशुध्यर्थं प्रायश्चित्तमिहोच्यते॥
" एकवारं द्विवारं वा बहुवारमनेकशः। तप्तं पराकं चान्द्रं च यावकं वर्षमाचरेत्॥
" तस्योपनयनं भूयः पञ्चगव्येन शुध्यति। १०
" वृद्धेरपि च या वृद्धिश्चक्रवृद्धिरुदाहृता। मासिमासि च या वृद्धिः सा शिखावृद्धिरिष्यते॥
" ताभ्यां जीवेद्यदा विप्रः स वार्धुषिक उच्यते।
" मासं जीवेद्यदा विप्रः पराकं कृच्छ्रमाचरेत्। मासद्वये तु तप्तं स्याच्चान्द्रं मासत्रये स्मृतम्॥
" षण्मासे तु महाचान्द्रं वत्सरे द्विगुणं स्मृतम्। पतितः स्यात्परं विप्रः सर्वकर्मबहिष्कृतः "॥

**ऋणादि कृत्वा व्रताद्याचरणनिषेधः। हेमाद्रौ**— १५

" स्वस्याकिंचन्यमज्ञात्वा ऋणं कृत्वा व्रतं चरेत्। भोगासक्तश्च यः स्वात्मविक्रयीत्युच्यते बुधैः॥
" नित्यकर्माणि काम्यानि इष्टापूर्तादिकानि च। सर्वं तस्यैव भवति स्वयं वै निष्फलो भवेत्॥
"अर्वाग्धनस्य द्वैगुण्यात् तस्माद्दद्यात्सवृद्धिकम्। ऊर्ध्वं तु कर्मणां भ्रंशात् पतितः स्यान्न संशयः॥
" हिरण्यगर्भं तस्योक्तं प्रायश्चित्तं महर्षिभिः। धनिने च धनं दत्वा प्रायश्चित्तं समाचरेत्"॥ इति।
" कल्पान्ते भ्रूणहा मुच्येतर्णी तु न कदाचन " इति वचनमकृतप्रायश्चित्तविषयम्। २०
यत्तु **संवर्त** आह—
" आग्निहोत्री तपस्वी च ऋणवान्म्रियते यदि। अग्निहोत्रं तपश्चैव सर्वं तद्धनिनां धनम् "॥
इति तद्द्वैगुण्यादूर्ध्वं मरणे धनग्राहिपुत्राद्यभावे चावगन्तव्यम्।

**ब्राह्मणादिविक्रये प्रायश्चित्तम्। हेमाद्रौ**—

" पूर्वजः पूर्वजं वापि बाहुजोरूजपादजान्। वशीकृत्यौषधैर्मन्त्रैर्विक्रयेद्यदि पापधीः। २५
" बाले चान्द्रं द्विजे प्रोक्तं पौगण्डे तद्द्वयं चरेत्। तरुणे तु महाचान्द्रं प्रौढे प्रोक्तं तु तत्त्रयम्॥
" भिन्नवर्णे विक्रये तु सहस्रं कृच्छ्रमाचरेत्।
" विप्रं यः क्षत्रियो हृत्वा विक्रयेद्यदि पापधीः। ब्रह्महत्याव्रतं कृत्वा शुद्धिमाप्नोति पौर्विकीम्॥
" तदर्धेनैव शुद्धः स्याद्रुजो विप्रविक्रये। शूद्रस्तु विक्रयेद्विप्रं मौसलं वधमर्हति॥
" जारजं वाऽत्मजं वापि विक्रीणीयात्सुतं यदि। तद्दोषपरिहारार्थं महासान्तपनं चरेत्॥ ३०
" बाले सान्तपनं प्रोक्तं पौगण्डे तद्द्वयं स्मृतम्। कौमारे प्रौढकाले च महासान्तपनत्रयम्॥
" स्वपत्नीं विक्रयेद्यस्तु सतीं दुष्टामथापि वा। सतीं विक्रीय चान्द्रं स्यात्पराकं दुष्टचारिणीम्॥
"बालिकायां षडब्दं स्यात् वृद्धायां नास्ति निष्कृतिः। ज्ञात्वा विक्रयते यस्तु द्विगुणं व्रतमाचरेत्॥
" विवाहार्थं धनं गृह्णन् यत्किंचिद्व्याजमाश्रितः। स कन्याविक्रयी तस्य शुद्धिश्चान्द्रायणत्रयात्॥

---

१ क्ष–च। २ ग–र्धे। ३ क्ष–द्विज।

" द्विजः संपाद्य यो दासीं गृहकर्मसुखाप्तये। युवतिं विक्रयित्वा तां षडब्दं कृच्छ्रमाचरेत् ॥
" स्नानादिनित्यकर्माणि इष्टापूर्तादिकानि च। उपोषणव्रतादीनि श्रौतस्मार्तादिकानि च ॥
" विक्रीणीयात्तु यो विप्रो माघस्नानं तथैव च। चान्द्रयणत्रयं कृत्वा पुनःसंस्कारकृत्तथा ॥
" पञ्चगव्यं ततः पीत्वा शुद्धिमाप्नोति नैष्ठिकीम् " ॥

५ **श्रुतिस्मृत्यादेः विक्रये प्रायश्चित्तम्**। **वसिष्ठः**—
" श्रुतिं स्मृतिं धर्मशास्त्रं पुराणं ज्योतिषं तथा। पुस्तकं फलकं वापि तत्साधनमथापि वा ॥
"विक्रयेद्यदि लोभात्मा महान्तं नरकं व्रजेत्। चान्द्रायणं पराकं वा कृत्वा शुद्धिमवाप्नुयात्"॥ इति।
**मार्कण्डेयः**—" सालग्रामशिलां यो वै तत्तच्चक्राङ्कितां द्विजः।
" शिवलिङ्गं चक्रपाणिप्रतिमां यदि विक्रयेत्। चान्द्रायणं प्रकुर्वीत पश्चात्तापसमन्वितः ॥
१० " लक्ष्मीनृसिंहं वामनं च गोपालं श्रीधरं तथा। लक्ष्मीनारायणं चैव दधिवामनमेव च ॥
" हिरण्यगर्भमित्यादिमूर्तीः पापापहारिणीः। रामादिविक्रये विप्रश्चरेच्चान्द्रायणत्रयम् ॥
" लक्ष्मीनारायणं चैव तद्द्वयं दधिवामने। महाचान्द्रं प्रकुर्वीत लक्ष्मीनृसिंहविक्रये ॥
" पराकं देहशुद्ध्यर्थं चरेद्विप्रो विचारयन्। लिङ्गे तु स्फाटिके चैव तथा मारकते द्विजः ॥
" मासं दीक्षामुपागम्य प्रातः स्नात्वा यथाविधि।
१५ " सूर्योदयं समारभ्य यावदस्तंगतो रविः। प्रत्यहं दशसाहस्रं जपेच्चैवं षडक्षरम् ॥
"फलाहारं प्रकुर्वीत यदा मन्दायते रविः। स्थण्डिले शयनं कृत्वा मासान्ते शुद्धिमाप्नुयात्"॥ इति।
**जलाग्न्यादिषु मर्तुमुद्यम्य निवृत्तस्य प्रायश्चित्तम्**। चतुर्वर्णेषु यः कोऽपि स्वात्मघातार्थमुपक्रम्य कथंचित् घातात्प्रागेव निवर्तेत तस्य प्रायश्चित्तं प्रश्नपूर्वकमाह **पराशरः** (१२।५–८)–
" जलाग्निपतने चैव प्रव्रज्यानशनेषु च। प्रत्यावसितवर्णानां कथं शुद्धिर्विधीयते ॥
२० " प्राजापत्यद्वयेनैव तीर्थाभिगमनेन च। वृषैकादशदानेन वर्णाः शुध्यन्ति ते त्रयः ॥
" ब्राह्मणस्य प्रवक्ष्यामि वनं गत्वा चतुष्पथे। सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरेत् ॥
"गोद्वयं दक्षिणां दद्यात् शुद्धिं पाराशरोऽब्रवीत्। मुच्यते तेन पापेन ब्राह्मणत्वं च गच्छति"॥ इति।
नद्यादिप्रवेशनमग्निप्रवेशनं भृगुपतनं महाप्रस्थानगमनमनशनं चेति जलाग्न्यादयः पञ्च मरणहेतवः। जलादिमरणं द्विविधम्। विहितं प्रतिषिद्धं चेति। तत्र विहितमपि द्विविधम्। काम्यतपोरूपं प्राय-
२५ श्चित्तरूपं चेति। तत्तु कलौ वर्जनीयम्। युगान्तरेष्वपि विहितत्वेन न प्रायश्चित्तार्हम्। क्रोधादिना यज्जलादिमरणं तत् प्रतिषिद्धम्। तदेवात्र परिशिष्यते। जलाग्नीति विषबन्धनोद्बन्धनादेरप्युपलक्षणम्। तत्र मर्तुमुद्यम्य मृतस्य प्रायश्चित्तं नास्ति। तत्कर्तुरभावात्। यस्तूद्यम्य मरणान्निवर्तते तस्योद्यमनिमित्तमिदं प्रायश्चित्तम्। प्रत्यवसिता निवृत्ताः। क्षत्रियस्य प्रायश्चित्तद्वयं वैश्यस्य तीर्थयात्रा शूद्रस्य वृषसहितगोदशकदानं ब्राह्मणस्य वनगमनादि व्रतम्। आत्मनो हननोद्यमेन ब्राह्मणत्वमप-
३० गतं चण्डालत्वमागतम्। पुनर्व्रतचरणेन चण्डालत्वनिवृत्तौ पुनः पूर्वसिद्धं ब्राह्मण्यं प्रतिपद्यते। तदाह **वृद्धपराशरः**—
" अनाशकान्निवृत्तस्तु चातुर्वर्ण्यव्यवस्थितः। चण्डालः स तु विज्ञेयो वर्जनीयः प्रयत्नतः ॥
" ब्राह्मणानां प्रसादेन तीर्थाभिगमनेन च। गवां च दश दानेन वर्णाः शुध्यन्ति ते त्रयः ॥
" ब्राह्मणस्य प्रवक्ष्यामि गत्वारण्यं चतुष्पथम्। सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम् ॥

१ कग–च। २ गघ–रामं। ३ क्ष–णः। ४ कग–यम्य।

" सावित्र्यष्टसहस्रं तु जपेच्चैव दिने दिने। मुच्यते सर्वपापेभ्यो ब्राह्मणत्वं च गच्छति।
"भैक्षार्थं विचरेद् ग्रामं गृहान् सप्त वने वसन्। धौतां भिक्षां समश्नीयादब्दार्धेन विशुध्यति" ॥ इति।
तत्रैव व्रतान्तराण्याह **वसिष्ठः** (२३।१९–२२)—"जीवन्नात्मत्यागी कृच्छ्रं वा द्वादशरात्रं चरेत्।
त्रिरात्रं वोपवसेत्। नित्यं स्निग्धेन वाससा। " प्राणानात्मनि संयम्य त्रिः पठेदघमर्षणम्।
"अपि वैतेन कल्पेन गायत्रीं परिवर्तयेत्। अपि वाग्निमुपाधाय कूष्माण्डैर्जुहुयात् घृतम्" ॥ इति। ५

तत्र जपहोमौ विद्वद्विषयौ कल्पनीयौ। द्वादशरात्रत्रिरात्रौ त्वविद्वद्विषये शक्ताशक्तभेदेन व्यवस्थिताविति **माधवीये**।

**पारिव्राज्यात् प्रच्युतौ प्रायश्चित्तम्**। " प्रव्रज्यानशकेन च " इति **पराशरवरचने** यः प्रव्रज्याशब्दः तस्यार्थान्तरमप्युक्तं **तत्रैव**। परिवृज्यते विवर्ज्यते। तथा च सति पारिव्राज्यात् प्रच्युतस्य ब्राह्मणस्य प्राजापत्यं प्रायश्चित्तमुक्तं भवति। तदिदं श्रद्धालोः पुनरुप- १० नयनादिपुरःसरं पारिव्राज्यं जिघृक्षोर्वेदितव्यम्। मोहान्निवृत्तौ **संवर्तः**—

" संन्यस्य दुर्मतिः कश्चित् प्रत्यापत्तिं व्रजेद्यदि। स कुर्यात्कृच्छ्रमश्रान्तः षण्मासान् व्रत्यनन्तरम् ॥
" पुनः परिव्रजेद्विप्रो यथाविधि समाहितः " ॥ इति। अत्यन्ताशक्तमुग्धविषये **वृद्धपराशरः**—
" यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः। अनाशकनिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति ॥
"चरेत् त्रीणि च कृच्छ्राणि त्रीणि चान्द्रायणानि च। जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात्" ॥ इति। १५
शक्तो यस्तु पुनः पारिव्राज्यं न जिघृक्षति तस्य मरणान्तिकं राजदासत्वादिकम्।
अत्र **नारदः**—
"राज्ञ एव तु दासः स्यात् प्रव्रज्यावसितो द्विजः। न तस्य प्रतिमोक्षोऽस्ति न विशुद्धिः कथंचन" ॥ इति।
**कात्यायनः**—
" प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः। निर्वासं कारयेद्विप्रं दास्यं क्षत्रविशोर्नृपः " ॥ २०
**दक्षः**—
" पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति। श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् " ॥
**याज्ञवल्क्यः** (व्य. १८३)—" प्रव्रज्यावसितो राज्ञो दासः स्यान्मरणान्तिकम्" ॥ **अङ्गिराः**—
" संन्यासं चैव यः कृत्वा पुनरुत्तिष्ठते द्विजः। न तस्य निष्कृतिर्दृष्टा स्वधर्मात् प्रच्युतस्य तु ॥
" आरूढो नैष्ठिकं कर्म पुनरावर्तयेद्यतिः। आरूढपतितो ज्ञेयः सर्वकर्मबहिष्कृतः ॥ २५
" चण्डालाः प्रत्यवसिताः परिव्राजकतापसाः। तेषां जातान्यपत्यानि चण्डालैः सह वासयेत् ॥
" नैष्ठिकानां वनस्थानां यतीनामवकीर्णिनाम्। शुद्धानामपि लोकेऽस्मिन् प्रत्यापत्तिर्न विद्यते" ॥ इति।
**बह्वृचपरिशिष्टे**—
" धीपूर्वं रेत उत्सर्गो द्रव्यसंग्रह एव च। पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवेत् " ॥

**आत्मघातिनः शववहनादौ प्रायश्चित्तम्**। आत्महननस्यातिकष्टत्वमुक्त्वा तच्छववहनादौ ३० प्रायश्चित्तमाह **पराशरः** ( ४।१–४ )—
" अतिमानादतिक्रोधात् स्नेहाद्वा यदि वा भयात्। उद्बध्नीयात् स्त्रीपुमान्वा गतिरेषा विधीयते ॥
" पूयशोणितसंपूर्णे त्वन्धे तमसि मज्जति। षष्टिं वर्षसहस्राणि नरकं प्रतिपद्यते।

---

१ गघ–पारिव्राज्यं तेन विवक्ष्यते। २ क्ष–क्षाद्वय।

" नाशौचं नोदकं नाग्निं नाश्रुपातं च कारयेत् ।
" वोढारोऽग्निप्रदातारः पाशच्छेदकरास्तथा । तप्तकृच्छ्रेण शुध्यन्तीत्येवमाह प्रजापतिः ॥
" तप्तकृच्छ्रेण शुद्धास्ते कुर्युर्ब्राह्मणभोजनम् । अनडुत्सहितां गां च दद्याद्विप्राय दक्षिणाम्" ॥ इति ।
अन्धतमस्तीव्रो नरकविशेषः । यत्तु **स्मृत्यन्तरे**—
५ "एतानि पतितानां तु यः करोति विमोहितः । तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा" ॥ इति ।
एतानि दहनादीनि तेषां प्रकृतत्वात् तत् कामकारविषयम् । "विहितं यदकामानां कामतो द्विगुणं भवेत् " इति स्मरणात् । यच्च **बृहस्पतिनोक्तम्**—
" विषोद्बन्धनशस्त्रेण यः स्वात्मानं प्रमापयेत् । मृते मेध्येन लेप्तव्यो नान्यं संस्कारमर्हति ॥
"पाशच्छेत्ता तु यस्तस्य वोढा चाग्निप्रदस्तथा । सोऽतिकृच्छ्रेण शुध्येत पिण्डदो वा नराधमः" ॥ इति ।
१० यच्च **यमेनोक्तम्**—
"गोब्राह्मणहतं दग्ध्वा मृतमुद्बन्धनेन च । पाशं छित्वा तथा तस्य कृच्छ्रं सान्तपनं चरेत्" ॥ इति
तत् देशकालादितारतम्यापेक्षयोक्तम् । देशादितारतम्यस्य प्रायश्चित्ततारतम्यहेतुत्वात् ।
तथा च **व्याघ्रः**—
"देशं कालं वयः शक्तिं ज्ञानं बुद्धिकृतं तथा । अबुद्धिकृतमभ्यासं ज्ञात्वा निष्क्रयणं वदेत्" ॥ इति ।
१५ शक्त्यादितारतम्यवत् निमित्ततारतम्यमपि प्रायश्चित्ततारतम्ये कारणम् । अत एव स्पर्शाद्यल्पनिमित्ते स्वल्पं प्रायश्चित्तमाह **प्रजापतिः**—
"तच्छवं केवलं स्पृष्ट्वा पातयित्वाश्रु वा तथा । एकरात्रं तु नाश्नीयात् त्रिरात्रं बुद्धिपूर्वकम्" ॥ इति ।
निमित्तभूयस्त्वेऽधिकं प्रायश्चित्तमाह **वसिष्ठः**—
"य आत्मत्यागिनां कुर्यात् स्नेहं[1] प्रेतक्रियां द्विजः । तप्तकृच्छ्रं[2] तु सहितं चरेच्चान्द्रायणव्रतम्" ॥ इति ।
२० प्रमादादिकरणे पातित्याभावात् नैतत्प्रायश्चित्तम् । तच्चाधस्तात् प्रतिपादितम् ।

**अनृतभाषणे प्रायश्चित्तम्** । अनृतभाषणे **मनुः** ( ८।१०६–१०७ )—
" वाग्दैवत्यैस्तु चरुभिर्यजेरंस्ते सरस्वतीम् । अनृतस्यैनसस्तस्य कुर्वाणो निष्कृतिं पराम् ॥
" कूश्माण्डैर्वापि जुहुयात् घृतमग्नौ यथाविधि । उदित्यृचा वा वारुण्या तृचेनाब्दैवतेन वा ॥
" अनृती सोमपः कुर्यात् त्रिरात्रं परमं तपः । पूर्णाहुतिं वा जुहुयात् संततेन[3] घृतेन तु " ॥ इति ।
२५ **याज्ञवल्क्यः** ( प्रा. २७९ )—
"मयि तेज इति च्छायां स्वां दृष्ट्वाम्बुगतां जपेत् । सावित्रीमशुचौ दृष्टे चापले चानृतेऽपि च" ॥ इति ।
एतत्कामकारे द्रष्टव्यम् । अकामकृते अनृतवचने **मनुः** ( ५।१४४ )—
" सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानि च । पीत्वापोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन् " ॥ इति ।

३० **मिथ्याभूतचतुर्वर्णवधशपथे प्रायश्चित्तम्** । एतस्य कार्यस्याकरणे चतुर्वर्णेष्वन्यतमं हतवानस्मीति शपथं कृत्वा यस्तत् कार्यं न करोति तस्य प्रायश्चित्तमाह **यमः**—
" विप्रस्तु वधसंयुक्तं कृत्वा तु शपथं मृषा । ब्राह्मणो यावकान्नेन व्रतं चान्द्रायणं चरेत् ॥
" क्षत्रियस्य पराकं तु प्राजापत्यं तथा विशः । वृषलस्य त्रिरात्रं तु व्रतं शूद्रहणश्चरेत् ॥
" केचिदाहुरपापं तु वृषलस्य वधं मुधा । न ममैतन्मतं यस्माद्धतस्तेन भवत्यसौ " ॥ इति ।

---

[1] गघ–कृत्स्नां । [2] ग–च्छ्रेण । [3] गघ–सप्तवत्या ।

**प्रतिश्रुत्यानृतोक्तौ हारीतः**—
" प्रतिश्रुत्यानृतं ब्रूयान्मिथ्यासत्यमथापि वा। स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणव्रतम् "॥ इति।
**ब्रह्मचार्यादिविषये गार्ग्यः**—
" त्रिरात्रमेकरात्रं वा ब्रह्मचार्यनृतं चरेत्। मासं भुक्त्वा ब्रह्मचारी पुनः संस्कारमाचरेत्॥
" अभ्यासे चैन्दवं कुर्यान्नैष्ठिको द्विगुणं चरेत्। वनस्थस्त्रिगुणं कुर्याद्यतिः कुर्याच्चतुर्गुणम्॥ ५
" मांसाशने चानृतोक्तौ शवनिर्वहणे तथा "॥ इति।
क्वचित्तु निमित्तविशेषेऽनृतमपि बुद्धिपूर्वं वक्तव्यं तदाह **याज्ञवल्क्यः** ( व्य. ८३ )—
"वर्णिनां तु वधो यत्र तत्र साक्ष्यनृतं वदेत्। तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः"॥ इति।
स्वोत्कर्षेऽनृतवचनं **मनुना** ( ११।५५ )—" अनृतं च समुत्कर्षे राजगामि च पैशुनम् " इति
ब्रह्महत्यासमेषु मध्ये पठितम्। १०
" निषिद्धभक्षणं जैह्म्यमुत्कर्षस्य वचोऽनृतम् " इति **याज्ञवल्क्येन** (प्रा. २२९) सुरापानसमेषु
पठितम्। **विष्णुना** तु (३७।१) 'अनृतवचनमुत्कर्षे' इत्युपपातकत्वमुक्तम्। अत्र च विषयभेद उक्तो
**माधवीये**—' द्वेष्यं पुरुषं राजादिभिर्मारयितुं तस्मिन्नविद्यमानमपि महान्तमपराधमारोप्यानृतं चेत्
ब्रूयात् तत् ब्रह्महत्यासमं वधपर्यवसायित्वात्। यस्तु लाभपूजाख्यातिकामो राजसभादौ स्वस्मि-
न्नविद्यमानमपि चतुर्वेदाभिज्ञत्वादिकं प्रथयितुमनृतं ब्रूते तत्सुरापानसममतिगर्हितत्वात्। यस्तु सुख- १५
गोष्ठ्यादौ परोपकारमन्तरेण वृथानृतं ब्रूते तस्यैतदुपपातकमिति। तत्राद्ययोः प्रायश्चित्तं **विष्णुनो-
क्तम्** ( ५४।१४ )—' समुत्कर्षेऽनृते गुरोरलीकनिर्बन्धे तदवज्ञानकरणे च मासं पयसा वर्तेत " इति।
तृतीये तु **याज्ञवल्क्याद्युक्तं** द्रष्टव्यम्—' शतमश्वानृते हन्ति सहस्रं तु गवानृते ' इत्यादिना*
प्रतिपादिते दोषतारतम्ययुक्तेऽनृते उक्तप्रायश्चित्तेषु तारतम्यं द्रष्टव्यम्।

**श्रौताग्नित्यागे प्रायश्चित्तम्**। श्रौताग्नित्यागे प्रायश्चित्तमाह **विष्णुः** ( ५४।१३ )— २०
" अग्न्युत्सादी त्रिषवणस्नाय्यधःशायी संवत्सरं सकृद्भैक्षेण वर्तेत " इति। **वसिष्ठः** ( १।२३ )—
"योऽग्नीनपविध्येत् स कृच्छ्रं द्वादशरात्रं चरित्वा पुनराधानं कारयेत्" इति। **मनुः** (११।४१)—
" अग्निहोत्र्यपविध्याग्नीन् ब्राह्मणः कामकारतः। चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत्॥
"अग्निहोत्र्यपविध्याग्नीन् मासादूर्ध्वं तु कामतः। कृच्छ्रं चान्द्रायणं चैव कुर्यादेवाविचारयन्"॥ इति।
**हारीतः**—" संवत्सरोत्सन्नेऽग्निहोत्रे चान्द्रायणं चरित्वा पुनरादध्यात्। द्विवर्षोत्सन्ने चान्द्रायणं २५
सोमायनं च कुर्यात्। त्रिवर्षोत्सन्ने संवत्सरं कृच्छ्रमभ्यस्य पुनरादध्यात् " इति। **शंखोऽपि**—
" अग्न्युत्सादी संवत्सरं प्राजापत्यं चरेत् गां च दद्यात् "। इति। **भारद्वाजः**—" द्वादशाहाति-
क्रमे त्र्यहमुपवासो मासातिक्रमे द्वादशाहमुपवासः संवत्सरातिक्रमे मासोपवासः पयोभक्षणं च "
इति। एतत् सर्वमालस्यादिनिमित्तत्यागविषयम्। यत्तु **भारद्वाजगृह्ये**ऽभिहितम्—
" प्राणायामशतमा दशरात्रं कुर्यादुपवासः स्यात् आ विंशतिरात्रमत ऊर्ध्वमा षष्टिरात्रात् तिस्रो ३०
रात्रीरुपवसेत्। अत ऊर्ध्वं मासं वत्सरात् प्राजापत्यं चरेत्। अत ऊर्ध्वं कालबहुत्वे दोषबहुत्वं
इति तत् प्रामादिकत्यागविषयम्। यत्तु **जातुकर्णिराह**—" अतिकालं च जुहुयादग्नौ विप्राय
वा यवम्। नष्टेऽग्नौ विधिवद्दद्यात् कृत्वाऽऽधानं पुनर्द्विजः"॥ इति। तदौपासनाग्निविषयम्॥

---

१ घ–निःसारणे। *मनु स्मृ. ८।९९।

**नास्तिक्यप्रायश्चित्तम्**। नास्तिक्यप्रायश्चित्तमाह **वसिष्ठः** ( ६५।२९ )—" नास्तिकः कृच्छ्रं द्वादशरात्रं चरित्वा विरमेन्नास्तिक्यात् " इति । तदेतदुपपातकनास्तिक्यविषयम् । पातकनास्तिक्ये तु **शङ्खः**–" नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी मिथ्याभिशंसीत्येवं पञ्च संवत्सरं ब्राह्मणगृहे भैक्षं चरेयुः " इति । नास्तिकस्य त्रैविध्यमुक्तं **माधवीये**—

५ " नास्तिकस्त्रिविधः प्रोक्तो धर्मज्ञैस्तत्त्वदर्शिभिः । क्रियादुष्टो मनोदुष्टो वाग्दुष्टश्च तथैव च ॥

" उपपातकस्तु वाग्दुष्टो मनोदुष्टस्तु पातकः । अभ्यासात्तु क्रियादुष्टो महापातक उच्यते " ॥ इति । महापातकनास्तिके तु **हारीतः**—" कन्यादूषी सोमविक्रयी वृषलीपतिः कौमारदारत्यागी सुरामद्यपः शूद्रयाजको गुरोः प्रतिहन्ता नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्राह्मणमित्रघ्नो मिथ्याभिशंसी पतितसंव्यवहारी मित्रध्रुक् शरणागतघाती प्रतिरूपकवृतिरित्येते पञ्चतपोऽ-
१० भ्रावकाशजलशयनान्यनुतिष्ठेयुः क्रमेण ग्रीष्मवर्षाहेमन्तेषु मासं गोमूत्रयावकमश्नीयुः " ॥ इति ।

**एकपङ्क्तौ वैषम्येण दाने**। एकपङ्क्त्युपविष्टानां वैषम्येण दानादौ **यमः**—

"न पङ्क्त्यां विषमं दद्यान्न याचेन्न तु दापयेत् । प्राजापत्येन कृच्छ्रेण मुच्यते कर्मणस्ततः"॥ इति ।

**अपाङ्क्तेयपङ्क्तिभोजनादौ प्रायश्चित्तम्**। अपाङ्क्तेयपङ्क्तिभोजने **मार्कण्डेयः**—

" आपाङ्क्तेयस्य यः कश्चित् पङ्क्तौ भुङ्क्ते द्विजोत्तमः । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति " ॥
१५ पतितादिसंभाषणे **गौतमः** (९।१७–१९)—" न म्लेच्छाशुच्यधार्मिकैः सह संभाषेत । संभाष्य पुण्यकृतो मनसा ध्यायेत् । ब्राह्मणेन वा संभाषेत " इति अप्सु मूत्रपुरीषकरणे **सुमन्तुः**—

" अप्स्वग्नौ वा मेहतस्तप्तकृच्छ्रम् " इति । आर्तविषये **मनुः** ( ११।२०२ )—

" विनाद्भिरप्सु वाऽप्यार्तः शारीरं संनिवेश्य तु । सचेलो मुहुराप्लुत्य गामालभ्य विशुध्यति " ॥ कामकारे तु **यमः**—

२० " आपद्गतो विना तोयं शारीरं यो निषेवते । एकाहं क्षपणं कृत्वा सचेलः स्नानमाचरेत् "। इति ॥ ब्रह्मसूत्रं विना मूत्रपुरीषादिकरणे प्रायश्चित्तमुक्तं **स्मृत्यंतरे**—

" विना यज्ञोपवीतेन यद्युच्छिष्टो भवेत् द्विजः । प्रायश्चित्तमहोरात्रं गायत्र्यष्टशतं तु वा ॥

" अकामतस्तु पिबतो मेहतश्चैव भुञ्जतः । प्राणायामत्रिकं षट्कं नक्तं च त्रितयं क्रमात् "॥ इति । **संवर्तः**—

२५ " अनाचान्तः पिबेद्यस्तु अपि वा भक्षयेत् द्विजः । गायत्र्यष्टसहस्रं तु जपं कृत्वा विशुध्यति " ॥ इति ।

**पलाशदारुशयनादौ प्रायश्चित्तम्**। **शङ्खः**—

" अध्यास्य शयनं यानमासनं पादुके तथा । द्विजः पलाशवृक्षस्य त्रिरात्रं तु व्रती भवेत् ॥

" द्वौ विप्रौ ब्राह्मणाग्नी वा दंपती गोद्विजोत्तमौ । अन्तरेण यदा गच्छेत् कृच्छ्रं सांतपनं चरेत् ॥

" होमकाले तथा दोहे स्वाध्याये दारसंग्रहे । अन्तरेण यदा गच्छेत् द्विजश्चान्द्रायणं चरेत् ॥

३० " क्षत्रियस्तु रणे पृष्ठं दत्वा प्राणपरायणः । संवत्सरं व्रतं कुर्यात् छित्वा वृक्षं फलप्रदम् " ॥ इति स एव—" दुःस्वप्नारिष्टदर्शनादौ हिरण्यं घृतमर्पयेत् " ॥ इति ।

---

१ गघ–शाह । २ घ–श्चादद्यात् ।

**श्राद्धे निमन्त्रितस्य कालातिक्रमे प्रायश्चित्तम्**। श्राद्धे निमन्त्रितस्य कालातिक्रमे **यमः**—

"केतनं कारयित्वा तु योऽतिपातयते द्विजः। ब्रह्महत्यामवाप्नोति शूद्रयोनौ प्रजायते॥

"एतस्मिन्नेनसि प्राप्ते ब्राह्मणो नियतव्रतः। यतिचान्द्रायणं चैर्त्वा ततश्चान्द्रायणं चरेत्"॥ इति।

**क्षत्रियाद्यभिवादनादौ प्रायश्चित्तम्**। क्षत्रियाद्यभिवादने **हारीतः**—"क्षत्रियस्याभिवादनेऽहोरात्रमुपवसेत्। वैश्यस्य द्विरात्रं शूद्रस्य त्रिरात्रमुपवासः। शय्यारूढपादुकोपानदारोपितपादोच्छिष्टान्धकारस्थश्राद्धकृज्जपदेवपूजादिरनाभिवादने त्रिरात्रमुपवासः। अन्यत्र निमन्त्रितस्यान्यत्र भोजने त्रिरात्रमुपवासः"॥ इति।

**शूद्रस्य वेदवाक्यश्रवणे प्रायश्चित्तम्**। शूद्रस्य वेदवाक्यश्रवणादौ **गौतमः** (१२।४)—"अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः"॥इति।

**प्रतिग्रहविचारः**। अथ प्रतिग्रहो निरूप्यते। वृत्त्यर्थं सत्प्रतिग्रहे न प्रायश्चित्तापेक्षा।

"विहितात् प्रतिगृह्णीयात् गृहधर्मप्रसिद्धये। आत्मनो वृत्तिमन्विच्छन् गृह्णीयात्साधुतः सदा॥

"अनापद्यपि गृह्णीयात् याज्यतः शिष्यतस्तथा। धर्मतस्तु द्विजो गृह्णन् न धर्मात् परिहीयते"॥ इति **स्मृतेः**। असत्प्रतिग्रहे प्रायश्चित्तं कर्तव्यम्। स पञ्चविधः—

"असत्प्रतिग्रहः प्रोक्तः कालतो देशतस्तथा। स्वरूपतो जातितश्च कर्मतश्चेति पञ्चधा"॥ इति **स्मरणात्**। कालो ग्रहणादिः। देशः कुरुक्षेत्रादिः। स्वरूपं मेषीकृष्णाजिनतुलोभयतोमुख्यादिकम्। जातिः शूद्रादिः। कर्म पतनीयवृत्तिः। **मनुः** (१०।१०९)—

"प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः। प्रतिग्रहेण विप्राणां ब्राह्मं तेजो विनश्यति (४।१८६)।

"प्रतिग्रहीतुर्यत्पुण्यं दातारमधिगच्छति। दातुश्चैव हि यत्पापं प्रतिग्राहिणमृच्छति॥

"प्रायश्चित्तमतः कार्यं भीरुणा चानुतापिना॥

"यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम्। तस्योत्सर्गेण शुध्यन्ति जपेन तपसैव च (११।१९३)"॥ इति। उत्सर्गेण त्यागेन। जपेन वेदपारायणगायत्र्यादिजपेन। तपसा कृच्छ्रचान्द्रायणादिना च शुध्यन्तीत्यर्थः। **वृद्धमनुः**—

"कृषेस्तु विंशकं भागं वाणिज्यात् षष्ठमंशकम्। प्रतिग्रहे तुरीयांशं त्यक्त्वा पापात्प्रमुच्यते"॥ इति। **व्यासः**—

"वाणिज्यस्याष्टमं भागं भागं विंशतिमं कृषेः। प्रतिग्रहे चतुर्थांशं त्यक्त्वा पापैः प्रमुच्यते॥

"अन्यथा निष्कृतिर्नास्ति जपैस्तीर्थनिषेवया"॥ इति। **चतुर्विंशतिमते**—"प्रतिषिद्धेषु दानेषु षष्ठांशं परिकल्पयेत्" इति। **हेमाद्रौ**—"अथ चेत्प्रतिगृह्णाति ब्राह्मणो वृत्तिकर्शितः॥

"दशांशमार्जितात् दद्यादेवं तत्र न हीयते। गृहीतात् षोडशांशं तु पञ्चमांशमथापि वा"॥ अत्राभियुक्तैर्व्यवस्था दर्शिता—पञ्चदोषदुष्टप्रतिग्रहे साङ्गं द्रव्यत्यागं कुर्यात्।

"अज्ञानाद्यदि वा मोहादसद्द्रव्यं प्रगृह्य तु। सर्वं द्रव्यं परित्यज्य चान्द्रायणमथाचरेत्॥" इति **स्मरणात्**। त्यक्तं च द्रव्यं ब्राह्मण एव गृह्णीयात्। 'प्रहीणं ब्राह्मणस्येति' **स्मरणात्**। एवं कृत्वा जपतपोभ्यां शुद्धिः कार्या। त्रिचतुरदोषदुष्टस्य दरिद्रस्य चतुर्थांशत्यागः। आढ्यस्य त्वर्धत्यागः कार्यः। 'असत्प्रतिग्रहे तु त्वर्धं त्यक्त्वा पापात्प्रमुच्यते' इति **स्मरणात्**। दोषद्वययुक्तस्य पञ्चमांशत्यागः।

---

१ ख–नी। २ क्ष–मास। ३ गघ–ब्रास्ये।

एकदोषदुष्टस्य षष्ठांशत्यागः । दरिद्रस्योभयत्रापि दशांशत्यागः षोडशांशत्यागो वा कार्यः । सर्वत्र द्रव्यत्यागानन्तरं जपादिरूपं प्रायश्चित्तं च कर्तव्यम् । कृष्णाजिनकालपुरुषतिलधेनूभयतोमुखीमहिषीमेषीदानादीनां निषिद्धप्रधानद्रव्याणां प्रधानद्रव्यं दक्षिणाद्यङ्गद्रव्यस्य चतुर्थांशं च त्यक्त्वा प्रायश्चित्तं च कार्यम् । अन्ये तु प्रधानद्रव्यं परित्यज्य दक्षिणाद्यङ्गद्रव्यं स्वीकृत्य ५ प्रायश्चित्तं कार्यमिति। स्वल्पद्रव्यपरिग्रहे प्रायश्चित्तमुक्तं षट्त्रिंशन्मते "भिक्षामात्रे गृहीते तु पुण्यं मन्त्रमुदीरयेत् " ॥ इति । हारीतः—" मणिवासोगृहादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत् " ॥ याज्ञवल्क्यः—( प्रा. २९० )

" गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रतः । गायत्रीजप्यनियतः शुध्यतेऽसत्प्रतिग्रहात् " ॥ इति । अत्र जपसंख्या मनुना दर्शिता ( ११।१९४ )

१० "जपित्वा त्रीणि गायत्र्याः सहस्राणि समाहितः । मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् "॥ इति । एतच्च दातृद्रव्ययोरुभयोरसत्वे वेदितव्यम् । अन्यतरस्यासत्त्वे तु षट्त्रिंशन्मते दर्शितम्—

" ऐन्दवेन मृगारेष्ट्या कदाचिन्मित्रविन्दया । पवित्रेष्ट्या विशुध्यन्ति सर्वे घोराः प्रतिग्रहाः" ॥ इति।

" देव्या लक्षजपेनैव शुध्यन्तेऽसत्प्रतिग्रहात् " ॥ इति ।

यत्तु वृद्धहारीतवचनम्—" राज्ञः प्रतिग्रहं कृत्वा मासमप्सु सदा वसेत् ॥

१५ " षष्ठे काले पयोभक्षः पूर्णे मासे प्रमुच्यते । तर्पयित्वा द्विजान् कामैः सततं नियतव्रतः " ॥ इति तत् पञ्चदोषदुष्टप्रतिग्रहविषयमिति माधवीये ।

तुलापुरुषादिप्रतिग्रहे । तुलादिषोडशमहादानप्रतिग्रहे प्रातिस्विकं प्रायश्चित्तमुक्तं हेमाद्रौ । तदिदानीं निरूप्यते । तत्र देवस्वामी—" तुलाप्रतिग्रहीता च पूर्वजो विषयातुरः ।

" सोऽरण्ये निर्जले देशे भवति ब्रह्मराक्षसः । नास्त्येव निष्कृतिस्तस्य नवलक्षजपादृते " ॥

२० देवलः–" ऋणापकरणार्थं वा तथा यागार्थमेव वा । द्विजः प्रतिग्रहं कृत्वा तदर्धं विनियोजयेत् ॥

" सुवर्णरत्नरजतैस्तुलाश्च त्रिविधाः स्मृताः । तासां प्रतिग्रहे विप्रः ऋणयागादिभिर्विना ॥

"रौरवे नरके घोरे ऋत्विग्भिः सह मज्जति"॥ इति । ऋत्विजो ब्रह्मा सदस्यो होतारो जापकाश्च । देवीपुराणे—

" आत्मतुल्यसुवर्णं यः प्रतिगृह्य धनातुरः । अकृत्वा निष्कृतिं तस्य ऋत्विग्भिः सह राक्षसः"॥ इति।

२५ गारुडपुराणे—

" श्रीशैले हेमकूटे वाऽप्यचले गन्धमादने । अहोबिले वेंकटाद्रौ काश्यादिषु विशेषतः ॥

" सूर्योपरागकालेषु अन्यकालेषु पर्वसु । प्रतिगृह्य तुलां विप्रो राज्ञो यो भोगलालसः ॥

" सोऽरण्ये निर्जले देशे दृष्टिहीनो निराश्रयः । सहस्राब्दं भवेद्रक्षो नवलक्षजपादृते " ॥ इति । ब्रह्माण्डे—

३० " सेत्वादिपुण्यतीर्थेषु उपरागादिपर्वसु । पूर्वजः प्रतिगृह्णाति तुलां राज्ञो विशेषतः ॥

" भवेद्रक्षः सहस्राब्दं दृष्टिहीनो निराश्रयः । निष्कृतिस्तस्य गायत्र्या नवलक्षजपादिह ॥

" यदा प्रतिग्रहस्तस्यास्तदा पातित्यमर्हति । सन्ध्यादिनित्यकर्माणि विफलानि न संशयः ॥

" सावित्रीपतितं विद्यात् पुनःसंस्कारमर्हति " ॥

---

१ गद्य–गवा ।

**स्कान्देऽपि**—
" प्रतिगृह्य तुलामाशु नवलक्षं जपेद्बुधः । चतुर्थांशव्ययं कृत्वा यज्ञं वा सर्वदक्षिणम् ॥
" तदर्धं ब्रह्मणः प्रोक्तं तदर्धं सदसस्पतेः । होतॄणां द्वारपालानां पाठकानां महामुने ॥
" जापकानामिदं प्रोक्तं तयोरर्धं विचक्षणैः "॥ तयोः ब्रह्मसदस्ययोः । अर्धं सर्वेषां प्रायश्चित्तमित्यर्थः।
**मार्कण्डेयपुराणे** तु—" तुलाप्रतिग्रहीता च प्रायश्चित्तमिदं चरेत् । ५
" चतुर्थांर्धांशभागेन परिषद्विधिपूर्वकम् । चतुर्थांशं धनं सर्वं चतुर्धा भागमाचरेत् ॥
" अनुवादे भागमेकं भागमेकं विधायके । भागः परिषदि प्रोक्तः शेषं कृच्छ्रादिषु न्यसेत् " ॥
**मार्कण्डेयपुराणे** तु—
" प्रधानं संपरित्यज्य यागार्थं दक्षिणां वहन् । तस्यैव निष्कृतिरियं मुनिभिः परिकीर्तिता ॥
" परेद्युर्वा तदानीं वा स्नात्वा शुचिरलंकृतः । नीलवर्णां च गामेकां श्यामां वाऽऽदाय निर्गदाम् ॥ १०
" आपोहिष्ठादिभिर्मन्त्रैः प्राङ्मुखीं मार्जयेज्जलैः । रक्तेन वाससाच्छाद्य त्रिः परिक्रम्य यत्नतः ॥
" तन्मूत्रस्नानमासाद्य जपेन्मन्त्रमिदं सुधीः । हिरण्यगर्भ इत्येनामृचमान्तं समुच्चरन् ॥
" विष्णुर्योनिमित्येताभिरान्ताभिरनुमन्त्रयेत् ॥
" स्थित्वा मुहूर्तं गोगर्भे स्वमूर्धानं निधाय च । अष्टयोनिमष्टपुत्रामनुवाकं जपेद्बुधः ॥
" ततः परं पुनर्जातं मन्येतात्मानमादृतः । स्वयं पिताथ वाचार्यो जातकर्मादि भावयेत् । १५
" व्रतान्तं तत्र तद्द्रव्यं दत्वाचार्यं क्षमापयेत् । ततः पूतो भवेद्देषु दक्षिणामात्रसंग्रहे " ॥
प्रधानत्यागाभावे पूर्वोक्तैरष्टलक्षजपादिभिः पूतो भवति । तथा च **हेमाद्रौ**—
" अन्यथा निष्कृतिर्नास्ति ह्यकृत्वा निष्कृतीरिमाः । सहस्राब्दं भवेद्रक्ष आचार्यो द्रव्यलोभतः ॥
" ब्रह्मा सदस्पतिश्चैव तदर्धं राक्षसो भवेत् । द्वारपा ऋत्विजश्चैव होतारो जापका अपि ॥
" तयोरर्धं भवेयुस्ते राक्षसा घोररूपिणः ॥ २०
" आचार्यार्धं जपः प्रोक्तो ब्रह्मणः सदसस्पतेः । तयोरर्धं तु होतॄणामितरेषामिति स्थितिः " ॥
**नागरखण्डे**—"एवं हिरण्यगर्भस्य ग्रहणे निष्कृतिः पुरा । दृष्टा मन्वादिभिर्विप्रैर्धर्मशास्त्रपरायणैः ॥
" अन्यथा निष्कृतिर्नास्ति प्रायश्चित्तैर्जडोदितैः " ॥

**ब्रह्माण्डघटविषये**—
" ततः परं विशुध्यर्थादिह लोके परत्र च । पुनः संस्कारविधिना ह्यभ्यसेद्वेदमातरम् ॥ २५
" ब्रह्मोपदेशं तत्रापि कुर्यादाचार्यवाक्यगैः । ततः परं जपेद्वेदमातरं प्रत्यहं सुधीः ॥
" प्रतिग्रहपरान्नेषु विमुखो विष्णुमादरात् । चिन्तयन्वर्तयन् विप्रः सुखी भव परत्र च ॥
" एवं कृत्वा द्विजो यस्तु निष्कृतिं शुद्धमानसः । तुलाप्रतिग्रहे राजन् शुद्धो भवति नान्यथा ॥
" अकृत्वा निष्कृतीरेता एकां वापि नरेश्वर । सन्ध्यादि नित्यकर्माणि पितृकर्माणि यानि च ॥
" न फलन्तीह सर्वाणि भस्मनि न्यस्तहव्यवत् । पुनःसंस्कारमात्रेण पुनरायान्ति तानि वै ॥ ३०
" ततः प्रतिग्रहीता तु आत्मदेहविशुद्धये । कुर्याद्वै विरजाहोमं पञ्चगव्यमनन्तरम् " ॥ इति ।
हिरण्यगर्भविषये **हेमाद्रौ**—
" पूर्वजो द्रव्यलोभेन ऋणयागादिभिर्विना । गर्भे स्वर्णमयं धृत्वा ऋत्विग्भिः सह राक्षसः "॥
**पाद्मे**—" हिरण्यगर्भं भूपालात् पूर्वजो भोगलालसः । प्रतिगृह्य स शीघ्रेण नक्तंचारी भवेद्भुवि ॥
" ऋत्विजः कीकसा नाम पिशाचाः संभवन्त्यथ । कथंचिन्निष्कृतीर्दृष्टा पुनर्गर्भान्न चान्यथा " ॥ ३५

---

१ गद्य–तथैव । २ गद्य–जलाप्लुतैः ।

देवीपुराणे—

" दक्षिणामात्रमालम्ब्य प्रधानं संपरित्यजेत् । तथापि धर्मयागादिं कृत्वा शुद्धिमवाप्नुयात् ॥

" शेषयेद्यस्तु मोहेन वृत्त्यर्थं भोगलालसः । तस्योपनयनं भूयो जननं गर्भगोलतः ॥

" पञ्चायुतेन शम्भोर्वा ह्यभिषेकेण मुच्यते । अष्टलक्षजपो देव्याः कूष्माण्डायुतहोमतः ॥

५ " चतुर्भागव्ययो वापि यज्ञो वा सर्वदक्षिणः । एवं कुर्यात् द्विजो यस्तु तस्माद् दोषात्प्रमुच्यते " ॥

देवलः—

" ब्रह्माण्डं यस्तु गृह्णाति द्विजः ऋत्वादिभिर्विना । ऋत्विग्भिः सह दुष्टात्मा राक्षसो भवति ध्रुवम्" ॥

मार्कण्डेयः—

" ब्रह्माण्डं पुण्यतीर्थेषु प्रतिगृह्णाति यो द्विजः । निष्कृतिस्तस्य नास्तीह वसुलक्षजपादृते " ॥

१० ब्रह्मकैवर्ते—

" ब्रह्माण्डघटसंज्ञं तु प्रतिगृह्णाति यो द्विजः । अष्टलक्षजपादस्य निष्कृतिर्ब्रह्मराक्षसात् " ॥ इति ।

गालवः—

" ब्रह्माण्डं यो द्विजो धृत्वा वसुलक्षं जपेदिह । पूतो भवति दुष्टात्मा इह लोके परत्र च ॥

" नियुतेनाभिषेकस्य शम्भो रुद्रविधानतः । चतुर्भागव्ययं कृत्वा यज्ञं वा बहुदक्षिणम् ॥

१५ "एषैव निष्कृतिस्तस्य ऋत्विग्भिः सहितस्य च । अन्यथा निष्कृतिर्नास्ति सहस्राब्दं पिशाचता " ॥

भविष्योत्तरे—

" आचार्यार्धं तयोः प्रोक्तं प्रायश्चित्तमिदं प्रभो । द्वाःस्थानां हि तदर्धं स्यादितरेषां हि पूर्ववत् ॥

" अथवा तच्चतुर्भागव्ययं तु कुरुते द्विजः । अन्यथा निष्कृतिर्नास्ति दानैस्तीर्थावगाहनैः ॥

" आचार्यं प्रविशेत्पापं राज्ञो दानाधिकारिणः । पादहीनं तयोः प्रोक्तं शेषं सर्वेषु संविशेत् ॥

२० " प्रायश्चित्तैर्विना राजन्न पुनन्ति प्रतिग्रहात् । तस्मादिदं प्रकर्तव्यं प्रायश्चित्तं द्विजातिभिः" ॥ इति ।

कल्पतरुविषये मार्कण्डेयः—" आपत्स्वपि सदा विप्रो न गृह्णीयादिमं तरुम् ।

" यान्यस्य सन्ति पर्णानि फलानि कुसुमानि च । तावतीस्तु समा भूयाद्राक्षसो निर्जने वने ॥

ऋत्विग्भिः ब्रह्मणा सार्धमधःपादविवर्जितः " ॥ इति ।

गारुडे—

२५ " न द्विजः क्वापि गृह्णीयात् बहुभिः कारणैर्विना । तरुमेनं पर्णवन्तं रक्षो भवति कानने ॥

"इष्ट्या पञ्चभ्यां विना राजन् ऋत्विग्भिः सह निर्जले । यावन्ति तस्य पर्णानि तावदब्दं नराधिप "॥ इति ।

गौतमः—

" द्विजो ऋणविमुक्त्यर्थं गृह्णीयात्कल्पभूरुहम् । यागार्थं स्वकृतग्रामतटाकादिविनाशने ॥

" सर्वं तदर्धं सहसा व्ययं कृत्वा न दोषभाक् । शुद्धो भवति मानुष्ये न भवेद्ब्रह्मराक्षसः " ॥ इति ।

३० मार्कण्डेयपुराणे—

" प्रतिगृह्य द्विजो मोहात् तरुमेनं सुखाप्तये । निष्कृतिस्तस्य नास्तीह नरकादेकविंशतेः ॥

" कथंचिन्निष्कृतिर्दृष्टा मनुनारदगालवैः । अष्टलक्षाद्वेदमातुश्चतुर्थांशव्ययेन वा ॥

" अभिषेकेण वा शम्भोर्भूमेर्वा त्रिः परिक्रमात् । रामसेत्वादितीर्थेषु त्र्यब्दाब्दस्नानतोऽपि वा ॥

" एता निष्कृतयो दृष्टास्तरोरेतस्य संग्रहे " ॥

३५ तत्रैव—" बाहुजादेकगुणितं पादजाद्द्विगुणं चरेत् । मुखजादुक्तमानेन ऊरुजात् [illegible] ॥

" एताभ्यो निष्कृतिभ्यश्च गतिर्नान्यत्र विद्यते " ॥ इति ।

**गोसहस्रप्रतिग्रहे प्रायश्चित्तम्** । गोसहस्रप्रतिग्रहे **देवलः**—

" तुलायां गोसहस्रेषु आचार्यस्य पुनर्भवः । आब्रह्मणोऽब्दपर्यन्तं नास्ति भूमौ पिशाचतः " ॥

पिशाचत्वान्निवृत्तिर्नास्तीत्यर्थः । **मार्कण्डेयः**—

" धृत्वाग्रजो गोसहस्रं राज्ञोऽन्यस्मात् द्विजन्मनः । नवलक्षं जपेद्देव्याः पुनःसंस्कारमर्हति " ॥ ५

**मत्स्यपुराणे**—

" पुण्यक्षेत्रे पुण्यतीर्थे सूर्याचन्द्रमसोर्ग्रहे । धेनूनां यः सहस्रं च प्रतिगृह्य धनातुरः ॥

" भुवः प्रदक्षिणं कृत्वा नवलक्षं जपेद्बुधः । केशानां वपनं कृत्वा पुनःसंस्कारमर्हति " ॥

**राजविषये**—

" सहस्रधेनुदाने तु आचार्यत्वं यदि व्रजेत् । तस्यैव निष्कृतिर्नास्ति नवलक्षजपादृते ॥ १०

" भूमेः प्रदक्षिणं कृत्वा केशानां वपनं पुनः । प्रायश्चित्तेन पूतात्मा पुनःसंस्कारमर्हति " ॥

**कूर्मपुराणे**—

" सहस्रधेनुदाने तु आचार्यो यदि लोभतः । भूमेः प्रदक्षिणं कृत्वा नवलक्षं जपेद् द्विजः ॥

" तदशक्तो महाशम्भोर्नमकैश्चमकैः शुभैः । कृत्वाऽभिषेकं विधिवत् अयुतं प्रयुतं तु वा ॥

" सर्वव्ययं च यागे वा कृत्वा शुद्धिमवाप्नुयात् " ॥ १५

**नागरखण्डे**—" ब्रह्मा सदस्यः पूर्वोक्तप्रायश्चित्तार्धमर्हति ।

" तदर्धं द्वारपालानां पाठकानां तथैव च । होतॄणां जापकानां च पूर्ववन्मुनिभिः स्मृतम् " ॥

**लिङ्गपुराणे**—

" तुलायां गोसहस्रे च आचार्यो यद्धनं हरेत् । अकृत्वा तद्व्ययं धर्म्यं पत्नीपुत्रपरिष्कृतः ॥

" तत्पत्नीनां च पुत्राणां मनुजानां जनाधिप । हव्यकव्येषु यो भोक्ता ये वा संबन्धिबान्धवाः ॥ २०

" ते वै कृच्छ्रद्वयं कुर्युः निष्कृतिः कथितोत्तमैः " ॥

**हिरण्यकामधेनुप्रतिग्रहे प्रायश्चित्तम्** । हिरण्यकामधेनुविषये **महाभारते**—

" राज्ञां पापनिबद्धानां सर्वदा पापचेतसाम् । पापनिर्मोचनी तेषां कामधुक् पुण्यवर्धनी ॥

" एतादृशीं पुण्यरूपां स्वर्णकामदुहं द्विजः । प्रतिगृह्णाति यो लोभात् स सद्यः पतितो भवेत् ॥

" अष्टलक्षजपाद्राजन् व्ययाद्वा अष्टभागतः । अभिषेकेण वा शम्भोः यज्ञाद्वा सर्वदक्षिणात् ॥ २५

" एतैः शुद्धिमवाप्नोति ह्युभयोर्लोकयोरपि " ॥

**कौर्मे**—"स्वर्णकामदुहं राज्ञा स्वर्चितां शास्त्रवर्त्मना । प्रत्यगृह्णाद् द्विजो यस्तु स सदा सूतकी भवेत् ॥

" प्रायश्चित्ती भवेत्सद्यः पुनर्ब्रह्मोपदेशतः । अष्टलक्षं जपं कृत्वा प्रत्यहं विधिपूर्वकम् ॥

" धनस्याष्टमभागेन प्रायश्चित्तिं समाचरेत् । अभिषेकेण वा विप्रो यज्ञात्सर्वस्वदक्षिणात् ॥

" एतेषूक्तेषु राजेन्द्र प्रायश्चित्तेन बुद्धिमान् । इह लोके परत्रापि शुद्धिमाप्नोत्यनुत्तमाम् " ॥ ३०

**हिरण्याश्वप्रतिग्रहे प्रायश्चित्तम्** । हिरण्याश्वप्रतिग्रहे **कौर्मे**—

" हिरण्यवाजिनं गृह्णन् द्विजो लोभपरायणः । जन्मत्रये राक्षसत्वमनुभूय पिशाचताम् ॥

" तदन्ते भुवमासाद्य रासभत्वमवाप्नुयात् । तदन्ते रोगवान् भूत्वा नरकं याति पाण्डव " ॥ इति

---

१ गव–ष्म ।

वामनपुराणे—

" हिरण्याश्वं द्विजो लोभात् राज्ञः पुण्यद्दिनेष्विह । प्रतिगृह्यात्मभोगार्थं स भवेद्ब्रह्मराक्षसः ।
" ततः खरत्वमासाद्य रोगवान् जन्मनां त्रये । ततो नरकमासाद्य तिष्ठत्या चन्द्रतारकम् ॥
" तस्यैव निष्कृतिर्नास्ति ह्यष्टलक्षजपादृते " ॥ इति ।

५ ब्रह्मकैवर्ते—"हिरण्याश्वं द्विजो धृत्वा तस्य निष्कृतिरीरिता। अष्टलक्षजपाद्वापि नियुताद्वाभिषेकतः॥
" अष्टमांशव्ययेनापि यागैर्वा सर्वदक्षिणैः । ततः शुद्धिमवाप्नोति पुनर्मौञ्जीविधानतः ॥
" तद्ब्रह्मा च सदस्यश्च प्रायश्चित्तार्धमर्हतः । द्वाःस्थास्तज्जापका राजन्नर्हन्त्यर्धार्धमंशतः ॥
" अन्यथा दोषवन्तस्ते न संभाष्याः कदाचन। न संस्पृश्यास्त्वपाङ्क्तेया नालपेत्तानिह द्विजान् " ॥

हिरण्याश्वरथप्रतिग्रहे प्रायश्चित्तम् । हिण्याश्वरथप्रतिग्रहे ब्रह्मकैवर्ते—

१० " हिरण्याश्वरथं यस्तु द्विजो गृह्णन्नराधिपात् । सोऽरण्ये निर्जले देशे ऋत्विग्भिः सह राक्षसः ॥
" तस्यैषा निष्कृतिर्दृष्टा मुनिभिस्तत्त्वदर्शिभिः । नवलक्षजपाद्वापि नियुताद्वाभिषेकतः ॥
" अष्टमांशव्ययेनापि प्रायश्चित्तविधानतः । तदन्ते वपनं कृत्वा पुनःसंस्कारमर्हति ॥
" एवं चेच्छुद्धिमाप्नोति प्रायश्चित्तेन भूयसा । अन्यथा तु न शुद्धः स्यान्न संभाष्यः कदाचन ॥
" ब्रह्मादीनां तदर्धांशन्यायः पूर्वोक्त इष्यते " ॥ इति ।

१५ हिरण्यहस्तिप्रतिग्रहे प्रायश्चित्तम् । हिरण्यहस्तिप्रतिग्रहे ब्रह्माण्डपुराणे—

" हिरण्यहस्तिनं धृत्वा पुण्यकालेषु पर्वसु । यो विप्रो लोभमोहेन राज्ञो दानार्थिनो नृप ॥
" न तस्य निष्कृतिर्दृष्टा दशलक्षजपादृते । लक्षहोमेन कूष्माण्डैः शुद्धिमाप्नोत्यनुत्तमाम् " ॥ इति ।

ब्रह्मकैवर्ते—

" हिरण्यहस्तिनं भूपात् द्विजो लोभविमोहितः । पुण्यकालेषु पुण्येषु तीर्थेष्वायतनेषु च ॥
२० " प्रतिगृह्य ततो लोभादकृत्वा निष्कृतिं नृप । सोऽरण्ये निर्जले देशे राक्षसोऽम्बरचारवान् ॥
" तस्यैव निष्कृतिर्नास्ति नवलक्षजपाद्विना । लक्षहोमेन कूश्माण्डैः शुद्धिमाप्नोति दैहिकीम्[१] ।
" अष्टमांशव्ययेनापि प्रायश्चित्तविधानतः । केशानां वपनं कृत्वा पुनःसंस्कारमाचरेत् ॥
" तदर्धं ब्रह्मणः प्रोक्तं तथैव सदसस्पतेः । तदर्धं द्वारपालानां जापकानां तदर्धतः ॥
" प्रायश्चित्तमिदं प्रोक्तं हेमहस्तिप्रतिग्रहे " ॥ इति ।

२५ पञ्चलाङ्गलप्रतिग्रहे प्रायश्चित्तम् । पञ्चलाङ्गलप्रतिग्रहे वसिष्ठसंहितायाम्

" लाङ्गलं मुखजो धृत्वा पञ्च वाप्येकमेव वा । तस्यैव निष्कृतीर्वक्ष्ये शृणु नान्यमनाः प्रभो ॥
" दशलक्षजपं वाथ प्रयुतं वाभिषेचनम् । चतुर्भागव्ययं कुर्याद्यज्ञं वा सर्वदक्षिणम् ॥
" एतत्पापविशुद्ध्यर्थं परेद्युर्वाप्यन्यतोऽपि वा । मार्तण्डस्योदयादर्वाक् स्नानं कृत्वा यथार्हतः ॥
" नित्यकर्म समाप्याशु यावत्सूर्योदयो भवेत् । तावद्गत्वा जलाधारं नद्रीं पुष्करिणीमपि ॥
३० " कण्ठदघ्नजले स्थित्वा स्मरन्नारायणं विभुम् । मुखमुद्धृत्य मार्तण्डं पश्यन्नुत्तानपाणिकः ॥
" अघमर्षणसूक्तं च जपन् पापविमुक्तये । यावदस्तं गतो भानुस्तावत्कालं जपेत्सुधीः ॥
" मध्ये माध्याह्निकं कृत्वा ब्रह्मयज्ञं च तर्पणम् । मनसा देवमाराध्य पुनर्गत्वा जलं जपेत् ॥
" सायं सन्ध्यामुपासित्वा सायं होममनन्तरम् । मौनं त्यक्त्वा तदा राजन् मिताहारं समाचरेत् ॥
" ओदनं यावकं भक्षेदथवा मुद्गभक्षणम् । अधःशायी भवेत्तत्र पापं कृतमनुस्मरन् ॥
३५ " प्रभातायां तु शर्वर्यां पूर्ववद्व्रतमाचरेत् ॥

---

१ गच–वैदिकीम् ।

" एवं तु मण्डले पूर्णे विरजाहोममाचरेत् । उपोष्य दिनमेकं च पञ्चगव्यं पिबेत्ततः ।
"ब्राह्मणान् भोजयेत्पश्चात् तेभ्यो दद्याच्च दक्षिणाम् । पश्चात्स्वयं प्रभुञ्जीयात् तद्विप्रानुज्ञया सह" ॥ इति ।
एतत् प्रायश्चित्तमाचार्यस्य । सर्वेषां प्रायश्चित्तमुक्तं **मात्स्ये**—
" ब्रह्मा सदस्पतिश्चैव तदर्धं भागमर्हतः । द्वारस्थानां तदर्धं स्यात्तदर्धमितरेषु वै ॥
" प्रायश्चित्तविधिश्चैष नान्यथा गतिरस्ति हि " ॥ इति । ५

**धराप्रतिग्रहे प्रायश्चित्तम्** । धराप्रतिग्रहे **शिवपुराणे**—
" धरामभ्यर्च्य गन्धाद्यैर्यो राजा पुण्यकालतः । विप्रसात्कुरुते तत्र पुण्यस्यान्तो न विद्यते ।
" गृह्णीयाद्यो धरामेनां पुण्यकालेषु पर्वसु । तस्य विप्रस्य चास्तीह न पुनर्जन्म राक्षसात् ॥
" ब्रह्मोपदेशः कर्तव्यः सावित्रीदानमेव च । ततः परं जपेद्देव्या दशलक्षमतन्द्रितः " ॥ इति ।
**पाद्मे**—" धरामभ्यर्चितां राज्ञा धर्मशास्त्रानुसारतः । यो विप्रः प्रतिगृह्णीयात् द्रव्यलोभपरायणः ॥ १०
" यज्ञादिकमकृत्वा चेत् भवति ब्रह्मराक्षसः । दशलक्षजपाद्देव्यास्तस्य निष्कृतिरीरिता ॥
" सदस्यब्रह्मणोरर्धं द्वारपानां तदर्धकम् । तदर्धं जापकानां च होतॄणां च तथैव च ॥
" मार्जनं सर्वदानानामाचार्याणां स्वयंभुवा । उक्तं पुरा देवमध्ये लोकस्यास्य हितैषिणा ॥
" अन्यथा मृत्युमाप्नोति कुर्यादेतत्प्रयत्नतः " ॥ इति ।

**विश्वचक्रप्रतिग्रहे प्रायश्चित्तम्** । विश्वचक्रप्रतिग्रहे **मार्कण्डेयः**— १५
" विश्वचक्रं द्विजो धृत्वा निर्निमित्तेन लोभतः । अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः ॥
" न तस्य पुनरावृत्तिः सहस्राब्दं महाभयात् । एषा वै निष्कृतिर्दृष्टा वसिष्ठेन महात्मना ।
" चतुर्भागव्ययं कृत्वा प्रायश्चित्तविधानतः । पुनःसंकारविधिना पुनःसंस्कारमाचरेत् ॥
" ब्रह्मोपदेशं सावित्रीमभ्यसेद् द्विजपुङ्गवात् । प्रयुतेनाभिषेकस्य निष्कृतिस्तस्य नान्यथा ॥
" तदर्धं ब्रह्मणः प्रोक्तं तथैव सदसस्पतेः । द्वारपानां जापकानां तयोरर्धं प्रकल्पयेत् " ॥ इति । २०

**कल्पलताप्रतिग्रहे प्रायश्चित्तम्** । कल्पलताप्रतिग्रहे **लिङ्गपुराणे**—
" दत्तामिमां कल्पलतां राजभिः पूजितां शुभाम् । यो गृह्णीयात् द्विजः कामात् स भवेद्ब्रह्मराक्षसः ॥
" यावज्ज्योतींषि तिष्ठन्ति तावत्तिष्ठति राक्षसः । तद्ब्रह्मा च सदस्यश्च द्वारपा जापका अपि ॥
" राक्षसाः क्रूरकर्माणो भवन्त्येव न संशयः । सहस्राब्दं तदर्धं च तदर्धं च यथाक्रमम् ॥
" प्रायश्चित्तं कल्पतरोर्यत्तदेव समाचरेत् " ॥ इति । २५

**सप्तसागरप्रतिग्रहे प्रायश्चित्तम्** । सप्तसागरप्रतिग्रहे **लिङ्गपुराणे**—
" मुखजो धनलोभेन गृह्णीयात्सप्तसागरम् । कुलेन सह संयुक्तो राक्षसो निर्जले भवेत् ॥
" यागार्थं दक्षिणां गृह्णन् प्रधानत्यागमाचरेत् । योगे सर्वव्ययं कृत्वा नास्ति तस्य पिशाचता ।
" प्रायश्चित्तेन पूतात्मा इह लोके परत्र च । चतुर्भागव्ययं वापि प्रायश्चित्तं समाचरेत् ॥
" तस्योपनयनं भूयः सावित्रीदानमेव च ॥ ३०
" ब्रह्मा सदस्यस्तस्यार्धं प्रायश्चित्तमिहार्हतः । द्वारस्थानां तयोरर्धं जापकानां यथाक्रमम् " ॥ इति ।

**चर्मधेनुप्रतिग्रहे प्रायश्चित्तम्** । चर्मधेनुप्रतिग्रहे **वामनपुराणे**—
" धृत्वा चर्ममयीधेनुं धनलोभपरायणः । सप्तजन्मसु राजेन्द्र विपिने निर्जनेऽजले ॥
" कृतं पापमनुस्मृत्य स भवेद्ब्रह्मराक्षसः ।
" तस्यैषा निष्कृतिर्दृष्टा देव्या द्वादशलक्षतः । तस्योपनयनं भूयः पुनःसंस्कारकर्मणा " ॥ इति । ३५

---

१ गद्य—गारुड ।

पराशरः—

" मुखजो यस्तु गृह्णीयात् चर्मधेनुं नृपात्मजात् । ग्रहणादिषु कालेषु पुण्यतीर्थेषु येषु च ॥
" चतुर्भागव्ययं कुर्यात् प्रायश्चित्तविधानतः । देव्या द्वादशलक्षेण नियुतेनाभिषेकतः ॥
" एषामन्यतमेनैव पुनःसंस्कारतः शुचिः । सदस्यब्रह्मणोरर्धमृत्विजामपि पूर्ववत् " ॥ इति ।

५ गारुडपुराणे—"तुलायां गोसहस्रे च लाङ्गले सप्तसागरे । विश्वचक्रे चर्मधेनौ महाभूतघटे तथा ॥
" हेमहस्तिरथे चैव आचार्यो मृत्युराविशेत् । तस्मात्तन्मार्जनं कर्म मृत्यूत्तरणहेतवे ॥
" तदानीं वा परेद्युर्वा पक्षे वा पञ्चमे दिने । मासमात्रे त्रिमासे वा वत्सरे पूर्णतां गते ॥
" प्रायश्चित्तेन पूतात्मा पुनःसंस्कारमर्हति ॥
" व्यवहारक्षमो भूयादुभयोर्लोकयोरपि । अन्यथा दोषमाप्नोति न मुक्तिर्ब्रह्मराक्षसात् " ॥ इति ।

१० **महाभूतघटप्रतिग्रहे प्रायश्चित्तम्** । महाभूतघटप्रतिग्रहे देवलः—

" पञ्चभूतघटं गृह्णन् विप्रो भवति राक्षसः । सहस्राब्दं वने घोरे निर्जले निर्जने वसेत् ॥
" पक्षमात्रं जपेद्देवीं द्विजः पापविशुद्धये । तस्योपनयनं भूयः पुनःसंस्कारकर्मणा ॥
" नियुतेनाभिषेकेण चतुर्भागव्ययेन च । नान्यथा शुद्धिमाप्नोति ब्रह्मराक्षसदेहतः ॥
" तदर्धं ब्रह्मणः प्रोक्तं तथैव सदसस्पतेः । द्वाःस्थानां जापकानां च तयोरर्धं प्रकल्पयेत् " ॥ इति ।

१५ स्कान्दे तु—"प्रतिगृह्य तुलादीनि राज्ञः पापपरायणात् । प्रायश्चित्तेन पूतात्मा पुनःसंस्कारमर्हति ॥
"गङ्गायां मौसलस्नानाच्छुद्धिमाप्नोति दैहिकीम् । रेवायां तु तथा स्नात्वा शुद्धिमाप्नोति पौर्विकीम्॥
" प्रातरारभ्य गण्डक्यामा सायं स्नानमाचरेत् । वर्षद्वयेन पूतात्मा ह्युभयोर्लोकयोः शुचिः ॥
" तथैव शोणभद्रायां पूर्वजः शुद्धिमाप्नुयात् । गौतम्यां नियतः स्नात्वा नित्यकर्मपरायणः ॥
" विंशत्या मौसलस्नानैरब्दमात्रेण शुध्यति । भीमरथ्यां महानद्यामर्धरात्रे जितेन्द्रियः ॥

२० " जानुदघ्ने जले स्थित्वा जपेन्मन्त्रं त्रियम्बकम् । सहस्रं पूर्णतां याति यावत्तावद्विरम्यते ॥
" एवं मासत्रयं कृत्वा शुद्धिमाप्नोति पौर्विकीम् । अखण्डायां तु कावेर्यां प्रातः स्नात्वा यथाविधि ॥
" नित्यकर्म समाप्याशु कण्ठदघ्ने जले वसन् । जपेच्च पौरुषं सूक्तमष्टोत्तरशतं द्विजः ॥
" यदा समाप्तिर्भवति तदा मौनं परित्यजेत् । एवं कुर्यात्प्रतिदिनं शुद्धः स्यादृतुमात्रतः ॥
" ताम्रपर्णीनदीतोये अवगाह्य दिनत्रयम् । त्रियम्बकं जपेन्नित्यं संख्यामनुपधारयन् ॥

२५ " दिनत्रये तु पूर्णेऽस्मिन् निर्विघ्नेन जनाधिप । पूतो भवति विप्रोऽसौ तुलादीनां प्रतिग्रहात् ॥
" धनुष्कोट्यां तुलादीनां ग्रहीता धनलोभतः । स्नात्वा मध्याह्नवेलायां गत्वा रामेश्वरालयम् ॥
" औपासनाग्नौ जुहुयाद्विरजाहोममादितः । अधःशायी भवेन्नित्यं मासमेकं निरन्तरम् ॥
" दुग्धाहारं फलाहारं द्वयोरेकं समाचरेत् । सेतुदर्शनमात्रेण ब्रह्महत्या विनश्यति ॥
" अर्वाचीनानि पापानि नश्यन्तीत्यत्र का कथा " ॥ इति । आहिताग्निः संपूर्णदक्षिणेन पुनः

३० स्तोमेन वा यजेत । 'यो वा बहु प्रतिगृह्य गरगीर्णमिव मन्येत पुनःस्तोमेन यजेत' इति श्रुतेः । 'उशनसः स्तोमेन गरगीर्णमिवात्मानं मन्यमानो यजेत' इत्याश्वलायनसूत्रम् । (श्रौतसू. उ.५।१) उशनसस्तोमो नाम एकाहः पुनःस्तोम इति चास्यैव संज्ञा । गरः विषं गरो गीर्णो येन स गरगीर्णः । यो बहुप्रतिग्रहादिना पापादिभयादात्मानं गरगीर्णमिव मन्येत स एतेन यजेतेति नारायणीयवृत्तिः ।

इति प्रतिग्रहप्रायश्चित्तम् ।

यत्र प्रतिपदं प्रायश्चित्तं नोक्तं नोपलभ्यते वा तत्र **साधारणं प्रायश्चित्तमुच्यते**।

**अतिपातकिप्रायश्चित्तम्**। तत्रानुपातकप्रायश्चित्तं **विष्णुराह** ( ३६।८ )—

" अनुपातकिनस्त्वेते महापातकिनो यथा। अश्वमेधेन शुध्यन्ति तीर्थानुसरणेन वा "॥ इति। तत्राश्वमेधः सार्वभौमराजविषयः " राजा सार्वभौमोऽश्वमेधेन यजेत " इति **श्रुतेः** ( आप. श्रौ. सू. २०।२; सत्याषाढसू. १४।१ )। तीर्थस्नानमितरविषयम्। ५

**उपपातकिप्रायश्चित्तम्**। उपपातकप्रायश्चित्तमाह **स** एव ( ३७।३६ )

" उपपातकिनस्त्वेते कुर्युश्चान्द्रायणं नराः। पराकमथवा कुर्युर्यजेयुर्गोसवेन वा "॥ इति।

**याज्ञवल्क्योऽपि** ( प्रा. २६५ )—

" उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा। पयसा वापि मासेन पराकेणाथ वा पुनः"॥ इति।

**संकरीकरणादिप्रायश्चित्तम्**। संकरीकरणादेः प्रायश्चित्तमाह **विष्णुः** ( ३९।२२–४०।२ )— १०

" संकरीकरणं कृत्वा मासमश्नीत यावकम्। कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं तु कारयेत्॥

" अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुध्यति। शीतकृच्छ्रेण वा शुद्धिः महासान्तपनेन वा। (४१।५)–

" मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम्। कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं विशोधनम्॥ " इति।

**मनुः** ( ११।१२५ )—

" संकरापात्रकृत्यासु मासं शोधनमैन्दवम्। मलिनीकरणीयेषु तप्तः स्याद्यावकं त्र्यहम् "॥ इति। १५

अनुक्तानां सर्वेषां पापानां साधारणं प्रायश्चित्तमाह **पराशरः** ( १२।७२ )—

" चान्द्रायणं यावकं च तुलापुरुष एव च। गवां चैवानुगमनं सर्वपापप्रणाशनम् "॥ इति। तुलापुरुषः कृच्छ्रविशेषः। पापगौरवलाघवानुसारेण चान्द्रायणादीन्यावृत्तान्यनावृत्तानि वा अनुष्ठेयानि।

**स** एव ( ११।५३ )—

" सर्वेषामेव पापानां संकरे समुपस्थिते। दशसाहस्रमभ्यस्ता गायत्री शोधनी परम् "॥ इति। २०

**शङ्खलिखितौ**—" क्रयविक्रयदुष्टभोजनप्रतिग्रहेष्वनादिष्टप्रायश्चित्तेषु सर्वेषु चान्द्रायणं प्राजापत्यं वा "॥ इति।

**शातातपः**—"अनुक्तेषु विधिं ज्ञात्वा प्राजापत्यं समाचरेत्। सर्वत्र सर्वपापेषु द्विजश्चान्द्रायणं चरेत्"॥

**उशनाः**—

" यत्रोक्तं यत्र वा नोक्तमिह पातकनाशनम्। प्राजापत्येन कृच्छ्रेण शुध्यते नात्र संशयः "॥ इति। २५

**मनुविष्णुविश्वामित्राः** ( ११।२०९ )—

" अनुक्तनिष्कृतीनां तु पापानामपनुत्तये। शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेत्"॥ इति।

**याज्ञवल्क्यः** ( प्रा. २७५ )—

" देशं कालं वयः शक्तिं पापञ्चावेक्ष्य यत्नतः। प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः "॥

**स** एव— ३०

" यदा यदा तु संकीर्णमात्मानं मन्यते द्विजः। तदा तदा तिलैर्होमो गायत्र्या वाचनं तथा"॥ इति।

**गौतमः** ( १९।१७–२० )—" संवत्सरं षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्विंशत्यहो द्वाविंशाहाः षडहस्त्र्यहोहोरात्रः[३] " इति कालाः। एतान्येवानादेशे विकल्पेन क्रियेरन्नेनःसु गुरुषु गुरूणि लघुषु लघूनि कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तम् "॥ इति।

---

१ गघ–तिपातकसमपातकयोः। २ घ–दशा। ३ गघ–षडहस्त्र्यहः अहोरात्र।

**स्मृत्यन्तरे**—"सर्वजन्मार्जितानीह भ्रूणहत्यादिकान्यपि । सर्वपापानि नश्यन्ति कृच्छ्रैर्द्वादशवार्षिकैः॥
"जन्मप्रभृति यत् किंचित्पातकं चोपपातकम् । अर्वाक्तु भ्रूणहत्यायाः षडब्दान्नश्यति ध्रुवम् ॥
"अब्दात्तु सकृदभ्यस्तं बुद्धिपूर्वमसन्महत् । तच्छुध्यत्यब्दकृच्छ्रेण महतः पातकादृते" ॥ इति ।
त्रिंशत्कृच्छ्रा अब्दकृच्छ्रः कृच्छ्रः प्राजापत्यः । स च प्रतिनिधिना कार्यः ।

५ **रहस्यपापप्रायश्चित्तानि** । अथ रहस्यप्रायश्चित्तानि । यत्पापं कर्तृव्यतिरिक्तेनान्येन केनापि न ज्ञातं तद्रहस्यम् । तस्य प्रायश्चित्तमपि रहस्येव कर्तव्यम् । तथा च **यमहारीतौ**—'रहस्ये रहस्यं प्रकाशे प्रकाशम्' इति । रहस्यत्वादेव नास्ति तत्र परिषदनुमत्यपेक्षा । तदाहतुर्**बृहस्पतियाज्ञवल्क्यौ** (प्रा. ३०१)—
"प्रख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम् । अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत्" ॥ इति ।
१० न च विना परिषदं व्रतज्ञानाभाव इति शङ्कनीयम् । शास्त्रज्ञस्य तद्विज्ञानसंभवात् । इतरेणापि बुद्धिमता विद्वद्गोष्ठ्यां केनचित् व्याजेनावगन्तुं शक्यत्वात् । रहस्यकृतं पापं स्वल्पेनापि जपादिना निवर्तते । अत एव प्राजापत्यादिव्रतानां जपादीनां च व्यवस्थामाह **मनुः** (११–२२६)—
"एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः । अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत्" ॥ इति ।
तत्र रहस्यानां साधारणं प्रायश्चित्तमाह **स एव** (११।२४५–२४६, २४८)—
१५ "वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा । नाशयन्त्याशु पापानि महापातकजान्यपि ॥
"यथैधस्तेजसा वह्निः प्राप्तं निर्दहति क्षणात् । तथा ज्ञानाग्निना पापं कृत्स्नं दहति वेदवित् ॥
"सव्याहृतिकाः सप्रणवाः प्राणायामास्तु षोडश । अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः" ॥
**बोधायनः** (२।४।१८)—
"यदुपस्थकृतं पापं पद्भ्यां वा यत्कृतं भवेत् । बाहुभ्यां मनसा वाचा श्रोत्रघ्राणेन[1] चक्षुषा ॥
२० "सर्वं दहति निःशेषं प्राणायामैस्त्रिभिः कृतैः" ॥

**गौतमः** (२५।७–१०) "अनार्जवपैशुनप्रतिसिद्धाचारानाद्यप्राशनेषु शूद्रायां च रेतः सिक्त्वा अयोनौ च दोषवति च कर्मणि अभिसन्धिपूर्वेऽपि अब्लिङ्गाभिरप उपस्पृशेत् । वारुणीभिरन्यैर्वा पवित्रैः । प्रतिषिद्धवाङ्मनसापचारे व्याहृतयः पञ्च । सर्वास्वपो वा आचामेदहश्च माऽऽदित्यश्च पुनात्विति । प्राता रात्रिश्च मा वरुणश्च पुनात्विति सायमष्टौ वा समिध आदध्यात् । देवकृतस्येति हुत्वैवं
२५ सर्वस्मादेनसो मुच्यते मुच्यत" इति । अनार्जवमनृजुत्वं मानसं कर्मशाठ्यं वा । पैशुनं परपरिवादः । वाचिकं प्रतिसिद्धाचारः । नियमलोपः कायिकं अनाद्यस्यानेकविधस्योपभोगः अनाद्यप्राशनम् । एतदादौ दोषवति कर्मणि च ।

**आपस्तम्बः** (१।९।२६।७)—"अनाद्यानपयःप्रतिषिद्धभोजनेषु दोषवच्च कर्माभिसन्धिपूर्वकं कृत्वाऽनभिसन्धिपूर्वं वा शूद्रायां च रेतः सिक्त्वा योनौ चाब्लिङ्गाभिर्वारुणीभिश्चोपस्पृश्य प्रयतो
३० भवति । ओंपूर्वाभिर्व्याहृतिभिः सर्वाभिः सर्वपापेष्वाचामेत् । आचमनादेव सर्वस्मात्पापात् प्रमुच्यते । अष्टौ वा समिध आदध्यात् । देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि स्वाहा । यत् स्वपन्तश्च जाग्रतश्चैनश्चकृम-तस्यावयजनमसि स्वाहा । यद्विद्वांसश्चाविद्वांसश्चैनश्चकृमतमस्यावयजनमसि स्वाहा । एनस

१ गघ–त्वग्घ्राणचक्षुषा ।

एनसोऽवयजनमसि स्वाहा । इत्येतैरष्टाभिर्हुत्वा सर्वस्मात् पापात्प्रमुच्यते। ऋतं च सत्यं चेत्यघमर्षणं त्रिरन्तर्जले पठेत् । सर्वस्मात्पापात् प्रमुच्यते । आयंगौः पृश्निरक्रमीदिति तृचं च त्रिरन्तर्जले पठेत् । सर्वस्मात् पापात् प्रमुच्यते। द्रुपदादिवेन्मुमुचान इति एनामृचं त्रिरन्तर्जले पठेत्। सर्वपापात् प्रमुच्यते। हंसः शुचिषदित्येतामृचं त्रिरन्तर्जले पठेत् । सर्वपापैः प्रमुच्यते । अपि वा सावित्रीं गायत्रीं पच्छोऽर्धर्चशः समस्तामिति त्रिरन्तर्जले पठेत् । सर्वपापैः प्रमुच्यते। अपि वा व्याहृतीर्व्यस्ताः समस्ताश्चेति त्रिरन्तर्जले पठेत्। सर्वस्मात्पापात् प्रमुच्यते । अपि वा प्रणवमेव त्रिरन्तर्जले पठेत् । सर्वस्मात् पापात् प्रमुच्यते। पवित्रैर्मार्जनं कुर्वन् रुद्रैकादशिनीं जपन्। मुच्यते सर्वपापेभ्यो महतःपातकादृते" ॥ इति ।

**आपस्तम्बः** ( १।९।२६।७ )--" अनार्जवपैशुनप्रतिषिद्धाचारेषु अभक्ष्याभोज्यापेयप्राशने शूद्रायां च रेतः सिक्त्वायोनौ च दोषवत्कर्माभिसन्धिपूर्वं कृत्वानभिसन्धिपूर्वं वा अब्लिङ्गाभिरप उपस्पृशेत् वारुणीभिर्वान्यैर्वा पवित्रैर्यथाकर्माभ्यासः " इति ।

**यमः**—" विरजाद्विगुणं जप्त्वा तदह्नैव विशुध्यति। पौरुषं सूक्तमावृत्य मुच्यते सर्वकिल्बिषात् ॥
" ऋषभं शतशो जप्त्वा तदह्नैव विशुध्यति । वेदमेकगुणं जप्त्वा तदह्नैव विशुध्यति ॥
" रुद्रैकादशकं जप्त्वा तदह्नैव विशुध्यति । जपेद्वाप्यस्य वामीयं पावमानीरथापि वा ॥
"कुन्तापं वालखिल्यांश्च निविंत्प्रैषं वृषाकपिम्। होतॄन् रुद्रान् पितॄन् जप्त्वा मुच्यते सर्वपातकैः"॥ इति।

होतॄन् चित्तिः स्रुगादीन् । पितॄन् परे युवांसमित्यादीन् । **चतुर्विंशतिमते**—
" पावमानीस्तथा काष्ठं पौरुषं सूक्तमेव च । सपुत्रं माधुच्छन्दसं जप्त्वा पापैः प्रमुच्यते ।
" मण्डूकं ब्राह्मणं रुद्रं शुक्रियं मोक्षकं तथा । वामदेव्यं बृहत्साम जप्त्वा पापैः प्रमुच्यते ॥
" यज्ञायज्ञियमादित्यज्येष्ठसाम च राजनम् । पौरुच्छेपं च सामानि जप्त्वा पापैः प्रमुच्यते ॥
" अथर्वशिरसं चैव पौरुषं सूक्तमेव च । नीलरुद्रांस्तथैवैन्द्रं जप्त्वा पापैः प्रमुच्यते ॥
" आथर्वणाश्च ये केचित् मन्त्राः कामविवर्जिताः । ते सर्वे पापहन्तारो याज्ञवल्क्यवचो यथा ॥
" अग्नेर्मन्वेऽनुवाकं तु जपेदेनमनुत्तमम् । सिंहे मे मन्युरित्येतमनुवाकं जपेद्द्विजः ॥
" जप्त्वा पापैः प्रमुच्येत बोधायनवचो यथा ।
" ऋग्वेदमभ्यसेद्यस्तु यजुःशाखामथापि वा । सामानि सरहस्यानि अथर्वाङ्गिरसस्तथा ॥
" यत्किंचित्पातकं कुर्यात् किंचेतॅमाता च तं जपेत् । हंसः शुचिषदित्येतां जपेद्वापि त्रियम्बकम् ॥
" ब्राह्मणानि च कल्पांश्च षडङ्गानि तथैव च । आख्यानानि तथान्यानि जप्त्वा पापात्प्रमुच्यते ॥
" इतिहासपुराणानि देवतास्तवनानि च । जप्त्वा पापैः प्रमुच्येत धर्मस्थानैस्तथापरैः " ॥ इति ।

**विष्णुः** ( ५६।१-२७ )—"अथातः सर्ववेदपवित्राणि भवन्ति । येषां जपैश्च होमैश्च द्विजातयः पापैश्च पूयन्तेऽघमर्षणं देवकृतं शुद्धवत्यस्तरत्समन्दीधावति कूश्माण्डाः पावमान्यः दुर्गा सावित्री अतिषङ्ग्यः पदस्तोभा व्याहृतयो भारुण्डानीन्द्रसामं पुरुषव्रतं दैवतं भासमब्लिङ्गं बार्हस्पत्यं वाक्सूक्तं गोसूक्तं अश्वसूक्तं मध्वृचः सामानि चेन्द्रशुद्धं शतरुद्रीयमथर्वशिरः त्रिसुपर्णो महाव्रतं नारायणीयं पुरुषसूक्तम् । " त्रीण्याज्यस्तोमानि रथंतरं चाग्नेर्व्रतं वामदेव्यं बृहच्च ।
" तानि जप्त्वा पुनन्ति जन्तून् जातिस्मरत्वं लभते य इच्छेत् " इति । **पैठीनसिः**—
" सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् । पुनस्तपस्वी भवति पङ्क्तिपावनपावनः " ॥

---

१ क्ष-व । २ घ-या । ३ गघ-यत्किंचेदमृतं ।

**वसिष्ठः**—
"हित्वा सकलपापानि लब्ध्वा सुकृतसंचयम् । स पूतो जायते धीमान्मुरजिन्नामकीर्तनात्" इति ।
**भृगुः**—"कोटिशो मनुजानां वै भीतिरिदं समुपस्थितम् । रामरामेति संकीर्त्य तं नाशयति मानवः ॥
"सर्वेषामेव पापानां प्रायश्चित्तमिदं स्मृतम् । नातः परतरं पुण्यं त्रिषु लोकेषु विद्यते" ॥ इति ।
५ **योगयाज्ञवल्क्यः**—
"न तावत्पापमेधेत यन्नाम्ना न हतं हरेः । अतिरेकभयादाहुः प्रायश्चित्तान्तरं वृथा" ॥ इति ।
**ब्रह्मकैवर्ते**—
"सर्वपापयुतो वापि कीर्तयन्ननिशं हरिम् । शुद्धान्तःकरणो भूत्वा जायते पङ्क्तिपावनः" ॥

**रहस्यब्रह्महत्यादिपापानां प्रतिपदोक्तप्रायश्चित्तम्** । अथ प्रतिपदोक्तानि ।

१० **व्यासः**—"योऽनूचानं द्विजं मर्त्यो हतवानर्थलोभतः । स जपेत्पौरुषं सूक्तं जलस्थश्चिन्तयन् हरिम् ॥
"तथैव ब्रह्महत्याया मुच्यते नात्र संशयः" ॥ इति ।
**यमः**—"ब्रह्महत्यासुरापानस्वर्णस्तेयगुरुतल्पेषु प्राणायामैः श्रौताघमर्षणं जपेत्" ॥ इति ।
**याज्ञवल्क्यः** ( प्रा. ३०२ )—
"त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् । अन्तर्जले विशुध्येत गां दत्वा तु पयस्विनीम्" ॥
१५ **शङ्खलिखितौ**—"त्रिरात्रोपोषितोऽन्तर्जलेऽघमर्षणं त्रिरावर्तयेत्" ॥ इति । **चतुर्विंशतिमते**—
"त्रिमधुत्रिसुपर्णं च नाचिकेतत्रयं तथा । नारायणं जपेत्सर्वं मुच्यते ब्रह्महत्यया" ॥ इति ।
**बोधायनः** ( ३।९।४ )—"ग्रामात् प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य स्नातः शुचिः शुचिवासा उदकान्ते स्थण्डिलमुपलिप्य सकृत्क्लिन्नवासा गोशकृत्पूतेन पाणिनादित्याभिमुखोऽघमर्षणं स्वाध्यायमधीयीत प्रातःशतं मध्याह्ने शतमपराह्ने शतमपरिमितं चोदितेषु नक्षत्रेषु प्रसृतियावकं प्राश्नी-
२० यात् । ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात् प्रमुच्यते । द्वादशरात्रान्महापातकेभ्यः ब्रह्महननं गुरुतल्पगमनं स्वर्णस्तैन्यं सुरापानमिति च वर्जयित्वा एकविंशतिरात्रात् तान्यतितरति" ॥ इति । **बृहद्विष्णुः**—"ब्रह्महत्यां कृत्वा प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेनेन्धनेनाग्निं प्रज्वाल्याघमर्षणेनाष्टसहस्रमाज्यैर्जुहुयात् । तेनैव तस्मात् पूतो भवति" ॥ इति ।
**मनुः** (२११२४९–२५१)—
२५ "कौत्सं जप्त्वाऽपनोत्येतद्वासिष्ठं च तृचं प्रति । माहित्रं शुद्धवत्यश्च सुरापोऽपि विशुध्यति ॥
"सकृज्जप्त्वास्य वामीयं शिवसंकल्पमेव च । सुवर्णमपहृत्यापि क्षणात् भवति निर्मलः ॥
"हविष्मन्तीयमभ्यस्य न तमं ह इतीति च । जप्त्वा च पौरुषं सूक्तं मुच्यते गुरुतल्पगः ॥
"मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः । सर्वमप्यपहन्त्येनो जप्त्वा वा नम इत्यृचाम् । ( २५६ )
"महापातकसंयुक्तोऽनुगच्छेद् गाः समाहितः । अभ्यस्याब्दं पावमानीः भैक्षाहारो विशुध्यति । (२५७)
३० "अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् । मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः । (२५८)
"त्र्यहं तुपवसेद्युक्तः त्र्यहं तूपनयन्नपः । मुच्यते पातकैः सर्वैः त्रिर्जप्त्वा वाघमर्षणम्" ॥
**यमः**(२-५)—"सुरापः कण्ठमात्रमुदकमवतीर्य सुतसोमात् प्रसृतिमादाय ओंकारेणाभिमन्त्र्य पिबेत् । ततोऽप्सु निमग्नो मानस्तोकीयं जपेत् । ब्राह्मणः स्वर्णस्तेयं कृत्वा हिरण्यशालायां प्रक्षिप्याप्सु निष्णातो ग्रीवामात्र उदके हिरण्यवर्णाभिश्चतसृभिरात्मानमभ्युक्ष्य त्रीन् प्राणायामान् कृत्वा
३५ तदेतस्मात् पूतो भवति । गुरुतल्पगमनं कृत्वाऽघमर्षणमन्त्रं जले त्रिरावृत्य तदेतस्मात् पूतो भवति" ॥

---

१ घ–स्तेयं । २ घ–प्रतीत्यृचं । ३ गघ–वत्यश्च । ४ घ–व्या । ५ घ–नम । ६ घ–चम् ।

**रहस्यसुरापानादिप्रायश्चित्तम्** । सुरापानादौ **याज्ञवल्क्यः** ( प्रा. ३०४-३०५ )—
" त्रिरात्रोपोषितो हुत्वा कूश्माण्डीभिर्घृतं शुचिः । ब्राह्मणः स्वर्णहारी तु रुद्रजापी जले स्थितः ॥
" सहस्रशीर्षा जापी तु मुच्यते गुरुतल्पगः । गौर्देया कर्मणोऽस्यान्ते पृथगेव पयस्विनी " ॥ इति ।
**शातातपः**—" मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा ॥
" भस्मच्छन्नो[1] भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः " ॥ इति । ५

जपश्चैकादशकृत्वः कार्यः । तदाहात्रिः—
" एकादशगुणान्वापि रुद्रानावर्त्य धर्मवित् । महापापैरपि स्पृष्टो मुच्यते नात्र संशयः " ॥ इति ।
**बोधायनः**—
" अघमर्षणं देवकृतं[2] शुद्धवत्यस्तरत्समाः । कूश्माण्डः पावमान्यश्च विरजामृत्युलाङ्गलम् ।
" दुर्गयाहुतयो रुद्रा महापातकनाशनाः " ॥ इति । **आश्वलायनः**— १०
" कुन्तापं वालखिल्यांश्च जप्त्वा पापैः प्रमुच्यते । ब्रह्महत्यादिपापेभ्यः पावमानात्प्रमुच्यते " ॥
**संवर्तः**—
" षण्मासं पञ्चमासं वा नियतो नियताशनः । जप्त्वा तु पौरुषं सूक्तं मुच्यते सर्वपातकैः " ॥ इति ।
**बोधायनः**—" मातृदुहितृस्नुषास्वसृसवर्णाविधवागमनं कृत्वा यः पुरुषसूक्तं त्रिरुच्चारयेत् तदानीमेव पूतो भवति " इति । **कूर्मपुराणे**— १५
" जपस्तपस्तीर्थसेवा दानं ब्राह्मणपूजनम् । ग्रहणादिषु कालेषु महापातकशोधनम् ॥
" उपोषितश्चतुर्दश्यां कृष्णपक्षे समाहितः ।
" यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
"प्रत्येकं तिलसंयुक्तान् दद्यात् सप्तोदकाञ्जलीन् । स्नात्वा नद्यां तु पूर्वाह्णे मुच्यते सर्वपातकैः"॥ इति ।
अत्र ज्ञानाज्ञानाभ्यासानभ्यासैर्व्यवस्था द्रष्टव्या । संसर्गी तदीयमेव प्रायश्चित्तं कुर्यात् । २०
'स तस्यैव व्रतं कुर्यात्' इत्यादिना पूर्वमेवोक्तत्वात् ।

**उपपातकरहस्यप्रायश्चित्तम्** । उपपातकरहस्यप्रायश्चित्तमाह **याज्ञवल्क्यः** ( प्रा. ३०६ )—
" प्राणायामशतं कार्यं सर्वपापापनुत्तये । उपपातकजातानामनादिष्टस्य चैव हि " ॥ इति ।
**स्मृत्यन्तरेऽपि**—
" दशप्रणवसंयुक्तैः प्राणायामैश्चतुःशतैः । मुच्यते ब्रह्महत्यायाः किं पुनः शेषपातकैः " ॥ इति । २५

**प्राजापत्यकृच्छ्रलक्षणम्** । अथ कृच्छ्रलक्षणम् । तत्र प्राजापत्यस्य **बोधायनः** (४।५।६)—
" प्राजापत्यो भवेत्कृच्छ्रो दिवा रात्रावयाचितम् । क्रमशो वायुभक्षश्च द्वादशाहं त्र्यहं त्र्यहम् " ॥
**आपस्तम्बः** ( १।९।२७।७ )—" त्र्यहमनक्ताशी अदिवाशी ततस्त्र्यहं त्र्यहमयाचितव्रतस्त्र्यहं नाश्नाति किं च नेति कृच्छ्रद्वादशरात्रस्य विधिः " ॥ इति ।

**मनुः** ( ११।२११ )— ३०
" त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् । त्र्यहं परं तु नाश्नीयात् प्राजापत्यं चरन्व्रतम्" ॥ इति ।

---

१ क्ष-हस्तच्छन्नो । २ गघ-देव ।

अस्यैवाधिकारिभेदेन प्रयोगान्तरमाह **वसिष्ठः** ( ७०।४२ )—

" अहःप्रातरहर्नक्तमहरेकमयाचितम् । अहः परं चोपवास एवं चतुरहौ परौ ॥

" अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः । बालवृद्धातुराणां च शिशुकृच्छ्रमुवाच ह " ॥

**बोधायनः** ( ४।५।७ )—

५ " अहरेकं तथा नक्तमज्ञातं वायुभक्षितम् । त्रिवृदेष परावृत्तो बालानां कृच्छ्र उच्यते " ॥

**याज्ञवल्क्यः** ( प्रा. ३१९।३२० )—

" एकभुक्तेन नक्तेन तथैवायाचितेन वा । उपवासेन चैकेन पादकृच्छ्रः प्रकीर्तितः ।

" यथाकथंचित् त्रिगुणः प्राजापत्योऽयमुच्यते " ॥ इति । एकभुक्तेन दिवा सकृद्भोजनेन नक्तेन रात्रौ सकृद्भोजनेन अयाचितेन न विद्यते याचितं यस्मिन् भोजने तेनात्र कालविशेषाप्रतीतेः दिवा १० रात्रौ वा सकृद्भोजनेनायाचितेनोपवासेनानाशनेन पादकृच्छ्रो भवति । अयमेव पादकृच्छ्रः स्वस्यावृत्त्या स्वस्थानविवृद्ध्या वा यथाकथंचित् त्रिगुणः त्रिरभ्यस्तः प्राजापत्य इत्युच्यत इत्यर्थः ।

एकभुक्तादिषु ग्राससंख्यां परिमाणं **चापस्तम्बो** दर्शितवान्—

" सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः । चतुर्विंशतिरयाचिते परं निरशनं स्मृतम् ॥

" कुक्कुटाण्डप्रमाणं तु यथावास्यं विशेत्स्वयम् " ॥ **चतुर्विंशतिमते**—

१५ " प्रातस्तु द्वादशग्रासाः सायं पञ्चदशैव तु । अयाचितेन द्वावष्टौ त्रिदिनं मारुताशनः " ॥ इति । अत्र शक्त्यपेक्षया व्यवस्था द्रष्टव्या ।

**पादकृच्छ्राणां वर्णभेदेन व्यवस्था ।**

**आपस्तम्बः** चतुरः पादकृच्छ्रानुक्त्वा तेषां वर्णभेदेन व्यवस्थामाह—

" त्र्यहं निरशनं पादः पादश्चायाचितं त्र्यहम् । सायं त्र्यहं तथा पादः प्रातः पादस्तथा त्र्यहम् ॥

२० " प्रातः पादं चरेच्छूद्रः सायं वैश्यस्य दापयेत् । अयाचितं तु राजन्ये त्रिरात्रं ब्राह्मणे स्मृतम् " ॥

अर्धकृच्छ्रपादोनकृच्छ्रयोः स्वरूपमाह **स एव**—

" सायंप्रातर्विनार्धं स्यात् पादोनं नक्तवर्जितम् " ॥ अयमर्थः—अयाचितोपवासयोः त्र्यहद्वयानुष्ठानेनार्धकृच्छ्रो भवति । नक्तत्रयव्यतिरिक्तत्र्यहत्रयानुष्ठानेन पादोनकृच्छ्रो भवतीति । अन्यथा अर्धकृच्छ्र**स्तेनै**वोक्तः—

२५ " सायं प्रातस्तथैवोक्तं दिनद्वयमयाचितम् । दिनद्वयं तु नाश्नीयात् कृच्छ्रार्धं तद्विधीयते" ॥ इति । यत्तु जपहोमादिबाह्याङ्गविहितं प्राजापत्यकृच्छ्रं **गौतमेना**भिहितं ( २६।१-१७ )—" हविष्यान्प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयात् । अथापरं त्र्यहं नक्तं भुञ्जीताथापरं त्र्यहं न [3]किंचन याचयेत् । अथापरं त्र्यहमुपवसेत् । तिष्ठेदहनि रात्रावासीत क्षिप्रकामः । सत्यं वदेदनार्यैर्न संभाषेत । रौरवयौधाजपे नित्यं प्रयुञ्जीतानुसवनमुदकोपस्पर्शनमापो हि ष्ठेति तिसृभिः पवित्रवतीभिर्मार्जयीत ३० हिरण्यवर्णाः शुचयः पावका इत्यष्टाभिरथोदकतर्पणं नमोऽहमाय मोहमाय मंहमाय [4]विधून्वते तापसाय पुनर्वसवे नमो नमो मौञ्ज्यायोर्म्याय वसुविन्दाय सार्वविन्दाय नमो नमः पाराय सुपाराय महापाराय पारयिष्णवे नमो नमो रुद्राय पशुपतये महते दैवताय त्र्यम्बकायैकचरायाधिपतये हराय शर्वायेशानायोग्राय वज्रिणे घृणिने कपर्दिने नमो नमः सूर्यायादित्याय नमोनमो नीलग्रीवाय शितिकण्ठाय नमो नमः कृष्णाय पिङ्गलाय नमो नमो ज्येष्ठाय श्रेष्ठाय वृद्धायेन्द्राय हरिकेशा- ३५ योर्ध्वरेतसे नमो नमः सत्याय पावकाय पावकवर्णाय कामाय कामरूपिणे नमो नमो दीप्ताय

---

१ घ-क्षता । २ घ-भ । ३ घ-कं । ४ घ-धू । ५ घ-देवाय ।

दीप्तरूपिणे नमो नमस्तीक्ष्णाय तीक्ष्णरूपिणे नमो नमः सोम्याय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमो नमश्चन्द्रललाटाय कृत्तिवाससे नमः। इत्येतद्वेवादित्योपस्थानमेता एवाज्याहुतयो द्वादशरात्रस्यान्ते चरुं श्रपयित्वैताभ्यो देवताभ्यो जुहुयादग्नये स्वाहा सोमाय स्वाहाऽग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतयेऽग्नये स्विष्टकृते स्वाहेत्यन्ते ब्राह्मणभोजनम् " इति । हविष्यानित्याद्युपवसेदित्यन्तेन प्राजापत्यस्वरूपमुक्तम्। ५ तिष्ठेदित्यादिना तस्येतिकर्तव्यतोच्यते । क्षिप्रकामः शीघ्रं शुद्धिकामः । भोजनाद्यविरुद्धकालेषु अहनि तिष्ठेत् रात्रौ निद्रामप्यासीन एव सेवेत । एवं सत्यं वदेदित्याद्यङ्गकलापे क्षिप्रकाम इत्यधिकारिविशेषणमनुषञ्जनीयम् । अनेन यः शनैः शुद्धो भवामीति मन्यते तस्य नायं नियम इति गम्यते । रौरवयौधाजये सामनी नमोऽहमायेत्यादयस्त्रयोदशमन्त्रास्तर्पणसूर्योपस्थानाज्यहोमेषु द्रष्टव्याः । अथवा संप्रदानविभक्त्यन्ताः षट्पञ्चाशन्मन्त्राः । एतन्मन्वाद्युक्तजपहोमाद्यङ्गरहितप्राजापत्यद्वय- १० स्थाने वेदितव्यमिति **माधवीये** ।

**अतिकृच्छ्रलक्षणम्** । अतिकृच्छ्रस्य **मनुः** ( ११।२१३ )—

" एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्वतः। त्र्यहं चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः " ॥ इति । एकभुक्तनक्तायाचितदिवसेषु नवस्वेकैकं ग्रासमश्नीयात्। त्र्यहं चोपवसेत्। अयमतिकृच्छ्रो भवतीत्यर्थः। **यमः**—"एकैकं पिण्डमश्नीयात् त्र्यहं काले त्र्यहं निशि। अयाचितं त्र्यहं चैव वायुभक्षः परे त्र्यहम् ॥ १५

" अतिकृच्छ्रं चरेदेतत्पवित्रं पापनाशनम् "॥ **बोधायनः** ( ४।५।८ )—

" एकैकं ग्रासमश्नीयात् पूर्वोक्तेन त्र्यहं त्र्यहम्। वायुभक्षस्त्र्यहं चान्यदतिकृच्छ्रोऽघनाशनः "॥

यत्तु **याज्ञवल्क्येनोक्तम्** ( प्रा.–३२० )—" अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजने " इति अयमेव प्राजापत्यकृच्छ्र एव एकभुक्तनक्तायाचितदिवसेषु नवसु पाणिपूरान्नभोजनयुक्तोऽतिकृच्छ्रो भवतीत्यर्थः। तथा च **पराशरः** ( ११।५२ )— २०

"नवाहमतिकृच्छ्रः स्यात् पाणिपूरान्नभोजनः। त्रिरात्रमुपवासः स्यादतिकृच्छ्रः स उच्यते"॥ इति तदेतदशक्तविषयम् । पाणिपूरान्नस्य ग्रासपरिमितान्नादधिकपरिमाणत्वात् ।

**कृच्छ्रातिकृच्छ्रलक्षणम्** । कृच्छ्रातिकृच्छ्रस्य **बोधायनः** ( ४।५।९ )—

" अब्भक्षस्त्र्यहानेतान्वायुभक्षस्ततः परम् । एष कृच्छ्रातिकृच्छ्रस्तु विज्ञेयः सोऽतिपावनः "॥ एकभुक्तनक्तायाचितदिवसेषु यो भोजनकालः तस्मिन्नेव काले केवलमुदकेनैव वर्तनं त्रिरात्रमुपवासश्च २५ कृच्छ्रातिकृच्छ्र इत्यर्थः। यत्तु एकविंशतिदिनपर्यन्तं क्षीरेणैव वर्तनमुक्तं **याज्ञवल्क्येन** (प्रा. ३२१)

" कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् " इति तदशक्तविषयम् ।

**तप्तकृच्छ्रलक्षणम्** । तप्तकृच्छ्रस्य **मनुः** ( ११।२१४ )—

" तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान्। प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः " ॥

**बोधायनः** ( ४।५।१० )— ३०

" त्र्यहं त्र्यहं पिबेदुष्णं पयः सर्पिः कुशोदकम्। वायुभक्षस्त्र्यहं चान्यत् तप्तकृच्छ्रः स उच्यते " ॥

**सांतपनकृच्छ्रलक्षणम्** । सांतपनस्य **मनुबोधायनौ** ( ११।२१२; ४।५।११ )—

" गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। एकरात्रोपवासश्च कृच्छ्रः सांतपनः स्मृतः " ॥ इति ।

एतस्य द्विरात्रसाध्यत्वमाह **याज्ञवल्क्यः** ( ३१५ )—
"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। जग्ध्वा परेऽह्न्युपवसेत् कृच्छ्रं सांतपनं चरन्" ॥ इति।

**महासांतपनलक्षणम्**। महासांतपनं त्रिविधं सप्तरात्रं पञ्चदशरात्रमेकविंशतिरात्रं चेति। तत्र सप्तरात्रस्य स्वरूपमाह **याज्ञवल्क्यः** (प्रा. ३१६)—

५ "पृथक् सांतपनद्रव्यैः षडहः सोपवासकः। सप्ताहेन तु कृच्छ्रोऽयं महासांतपनः स्मृतः" ॥ इति।

**यमः** पञ्चदशाहमाह—
"त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत्। त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिस्ततः शुचिः ॥
"महासांतपनं ह्येतत् सर्वपापप्रणाशनम्" ॥ इति। **जाबालिस्त्वाह**—
"षण्णामेकैकमेतेषां त्रिरात्रमुपयोजयेत्। त्र्यहं चोपवसेदन्ते महासांतपनं विदुः" ॥ इति।

१० एतत् त्रयं पापतारतम्यविषयं द्रष्टव्यम्। **पराकलक्षणम्**। पराकस्य **मनुः** ( ११।२१५ )—
"यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्। पराको नाम कृच्छ्रोऽयं सर्वपापप्रणाशनः" ॥ इति।

**पर्णकृच्छ्रलक्षणम्**। पर्णकृच्छ्रस्य **याज्ञवल्क्यः** (प्रा. ३१७)—
"पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः। प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः" ॥ इति।
पलाशोदुम्बरारविन्दबिल्वपर्णानामेकैकेन क्वथितमुदकं प्रत्यहं पिबेत्। कुशोदकं चैकस्मिन्नहनीति

१५ पञ्चाहसाध्यः पर्णकृच्छ्रः। पर्णकृच्छ्रस्य लक्षणान्तरमाह **यमः**—
"एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः। क्वाथयित्वा पिबेदद्भिः पर्णकृच्छ्रस्य लक्षणम्" ॥ इति।
पलाशपर्णान्येकीकृत्याम्भसा क्वाथयित्वा त्रिरात्रोपवासान्ते क्वाथितं तत्पयः पिबेत्। अयं पर्णकृच्छ्रो भवतीत्यर्थः।

**फलकृच्छ्रादिलक्षणम्**। फलकृच्छ्रादीनां स्वरूपमाह **मार्कण्डेयः**—

२० "फलैर्मासेन कथितः फलकृच्छ्रो मनीषिभिः। श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षैरपरस्तथा ॥
"मासेनामलकैरेवं श्रीकृच्छ्रः परमः स्मृतः। पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते ॥
"मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन तु" ॥ इति। यदा बिल्वादिफलान्यम्भसा क्वाथयित्वा मासमेकं तदम्भः पिबति तदा फलकृच्छ्रो भवति। यदा बिल्वपद्माक्षामलकाना-मन्यतमस्य क्वाथं मासमेकं पिबेत् तदा श्रीकृच्छ्रो भवति। यदा त्वेषां पत्रपुष्पमूलानां क्वाथं पिबेत्

२५ तदा पत्रपुष्पमूलकृच्छ्राणि भवन्ति।

**वारुणश्रीसौम्यकृच्छ्रलक्षणम्**। वारुणश्रीकृच्छ्रयोर्लक्षणमाह **यमः**—
"ब्रह्मचारी जितक्रोधो मासेऽप्युदकसक्तुकान्। पिबेच्च नियताहारः कृच्छ्रं वारुणमुच्यते ॥
"त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत्। त्र्यहं वै यावकेनैव श्रीकृच्छ्रं ह्येतदुच्यते" ॥ इति।
सौम्यकृच्छ्रस्य **याज्ञवल्क्यः** (प्रा. ३२२)—

३० "पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम्। एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते" ॥ इति।
आचामः ओदननिष्यावः। पिण्याकादीनां पञ्चानां एकैकं प्रतिदिनमुपभुज्य षष्ठेऽहन्युपवसेत्। स एष सौम्यकृच्छ्रः। यत्तु **जाबालेन** चतुरहव्यापी सौम्यकृच्छ्र उक्तः—
"पिण्याकं सक्तवस्तक्रं चतुर्थेऽहन्यभोजनम्। वासो वै दक्षिणां दद्यात् सौम्यो वै कृच्छ्र उच्यते" ॥ इति तदेतदशक्तविषयम्।

**तुलापुरुषकृच्छ्रलक्षणम्** । अथ तुलापुरुषकृच्छ्रमाह **जाबालिः**—
" पिण्याकं च तथाचामस्तक्रं चोदकसक्तवः । त्रिरात्रमुपवासश्च तुलापुरुष उच्यते " ॥ इति सोऽयमष्टदिवससाध्यः । **याज्ञवल्क्यः** पञ्चदशाहसाध्यमाह ( प्रा. ३२३ )—
" एषां त्रिरात्रमभ्यासात् एकैकस्य यथाक्रमम् । तुलापुरुष इत्येवं ज्ञेयः पञ्चदशाहिकः " ॥ इति । एषां पिण्याकादीनां पञ्चानाम् । **यम**स्तु एकविंशतिदिनसाध्यमाह— ५
" आचामाचितपिण्याकं तक्रं चोदकसक्तुकान् । त्र्यहं त्र्यहं प्रयुञ्जानो वायुभक्षस्त्र्यहद्वयम् ॥
"एकविंशतिरात्रस्तु तुलापुरुष उच्यते" ॥ इति । तदेतत् त्रयं पापतारतम्यविषयतया व्यवस्थापनीयम् ।

**अघमर्षणकृच्छ्रलक्षणम्** । अघमर्षणकृच्छ्रस्य **शङ्खः**—
" त्र्यहं त्रिषवणस्नायी मुनिः स्नात्वाऽघमर्षणम् । मनसा त्रिः पठेदप्सु न भुञ्जीत दिनत्रयम् ॥
" अघमर्षणमित्येतद्व्रतं सर्वाघसूदनम् " ॥ इति । प्रकारान्तरमाह **विष्णुः** ( ४६।२-९ )— १०
" त्र्यहं नाश्नीयात् त्र्यहं त्रिषवणस्नानमाचरेदप्सु त्रिरघमर्षणं जपेत् । दिवा तिष्ठेद्रात्रावासीत कर्मणोऽन्ते पयस्विनीं गां दद्यादित्यघमर्षणम् " इति ।

**दैवतकृच्छ्रलक्षणम्** । दैवतकृच्छ्रमाह **यमः**—
" यवागूं यावकं शाकं क्षीरं दधि घृतं तथा । त्र्यहं त्र्यहं तु प्राश्नीयात् वायुभक्षः परं त्रयम् ॥
" कृच्छ्रं दैवं तु तन्नाम सर्वकल्मषनाशनम् " ॥ इति । १५

**यज्ञकृच्छ्रम्** । यज्ञकृच्छ्रस्याङ्गिराः—
" युक्तस्त्रिषवणस्नायी संयतो मौनमास्थितः । प्रातः स्नानं समारभ्य कुर्याज्जप्यं च नित्यशः ॥
" सावित्रीं व्याहृतीश्चैव जपेदष्टसहस्रकम् । ओंकारमादितः कृत्वा रूपे रूपे तथादितः ॥
" भूमौ वीरासने युक्तः कुर्याज्जप्यं तु संयतः । आसीनश्च स्थितो वापि पिबेद् गव्यं पयः सकृत् ॥
" गव्यस्य पयसोऽलाभे गव्यमेव भवेद् दधि । दध्नोऽभावे भवेत्तक्रं तक्रालाभे तु यावकम् ॥ २०
" एषामन्यतमं यत्तु उपपद्येत तत् पिबेत् । गोमूत्रेण समायुक्तं यावकं चोपयोजयेत् ।
" सर्वपापहरो दिव्यो नाम्ना यज्ञ इति स्मृतः । एकाहेन तु कृच्छ्रोयमुक्तस्त्वङ्गिरसा स्वयम् ॥
" एतत्पातकयुक्तानां तथा चाप्युपपातकैः । महद्भिश्चापि युक्तानां प्रायश्चित्तमिदं शुभम् " ॥ इति ।

**यावककृच्छ्रलक्षणम्** ।
यावककृच्छ्रस्य **देवलः**—" यवकानामप्सु साधितानां सप्तरात्रं पक्षं मासं वा प्राशनं यावकम् । २५ एतेन यावकपायसोदकानि व्याख्यातानि " । **शङ्खः**—
" गोपुरीषे यवाभ्यासो मासमेकं समाहितः । व्रतं तु यावकं कुर्यात् सर्वपापापनुत्तये " ॥ इति ।

**प्रसृतियावककृच्छ्रलक्षणम्** । प्रसृतियावककृच्छ्रमाह **हारीतः**—"य आत्मकृतैः कर्मभिः गुरुमात्मानं पश्येत् । आत्मार्थं प्रसृतियावकं श्रपयेत् । ततोऽग्नौ जुहुयात् । तेन दैवबलिकर्म । श्रुतमभिमन्त्रयेत । ३०
" यवोऽसि धान्यराजोऽसि वारुणो मधुसंयुतः । निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम् ॥
" घृतं यवा मधु यवा आपोहिष्ठामृतं यवाः । सर्वं पुनन्तु मे पापं यन्मया दुष्कृतं कृतम् ॥
" वाचा कृतं कर्मकृतं मनसा दुर्विचिन्तितम् । अलक्ष्मीं कालकण्ठीं च सर्वं पुनीतं मे यवाः " ॥

---

१ घ-मंत । २ गघ-ममथ । ३ घग-यवा । ४ क्ष-खण्डन् । ५ क्ष-न ।

श्रप्यमाणं रक्षां कुर्यात् । नमो रुद्राय भूतपतये सावित्री मानस्तोकेति पात्रे त्रिः निषिच्य ये देवा मनोजातो मनोयुजः सुदक्षा दक्षपितरस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यो नमः स्वाहेति आत्मनि जुहुयात् । त्रिरात्रमेवात्रातिपापकृत् षड्रात्रं पीत्वा पूतो भवति सप्तरात्रं महापातकी द्वादशरात्रं पीत्वा सर्वं पुरुषकृतं पापं निर्दहति । निर्वृत्तानां यवानामेकं विंशतिरात्रं पीत्वा गणान्
५ पश्यति गणाधिपं पश्यति विद्यां पश्यति विद्याधिपं पश्यति योऽश्नीयाद्यावकं पक्वं गोमूत्रेष्वसकृत् दधिक्षीरसर्पिःषु मुच्यते सोंहसः क्षणात् इत्याह भगवान् मैत्रायाणिः " इति ।

**चान्द्रायणकृच्छ्रलक्षणम्** । अथ चान्द्रायणस्य प्रकार उच्यते । तच्च द्विविधं पिपीलिकामध्यं यवमध्यं चेति । यथा पिपीलिकायाः शिरःपृष्ठभागौ स्थूलौ मध्यं शून्यं तथा यस्य चान्द्रायणस्य मध्ये अमावास्यादिने सर्वग्रासह्रासः तस्य मध्यमभागसौक्ष्म्यात् पिपीलिका-
१० मध्यत्वम् । तद्यथा कृष्णप्रतिपदि व्रतं संकल्प्य चतुर्दश ग्रासान् भुञ्जीत । ततो द्वितीयामारभ्य प्रतिदिनमेकैकग्रासस्य ह्रासे सति अमावास्यायामुपवासः संपद्यते । पुनः शुक्लप्रतिपदि ग्रासमेक-मुपक्रम्य प्रतिदिनमेकैकग्रासवृद्ध्या पूर्णिमायां पञ्चदशग्रासाः संपद्यन्ते । स एष पिपीलिकामध्य-चान्द्रायणस्यानुष्ठानप्रकारः । तथा यवं मध्यस्थूलमुभावन्तौ शून्यौ । तथाहि—शुक्लप्रतिपदमारभ्य प्रतिदिनमेकैकग्रासवृद्ध्या पूर्णिमायां पञ्चदशग्रासाः संपद्यन्ते । कृष्णप्रतिपदमारभ्यैकैकग्रासह्रासे
१५ सति अमावास्यायामुपवासः इति मध्यभागस्थौल्याद्यवमध्यत्वम् ।

तत्र पिपीलिकामध्यमाह **वसिष्ठः** ( प. ७०।४५ )—

" मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश । ग्रासापचयभोजी सन् पक्षशेषं समापयेत् ॥

" तथैव शुक्लपक्षादौ ग्रासं भुञ्जीत चापरम् । ग्रासोपचयभोजी सन् पक्षशेषं समापयेत् " ॥

**पराशरः** ( १०।२ )—

२० "एकैकं ह्रासयेद् ग्रासं कृष्णे शुक्ले तु वर्धयेत् । अमावास्यां न भुञ्जीत ह्येष चान्द्रायणो विधिः" ॥ इति ।

चान्द्रायणद्वयमाह **देवलः**—"चान्द्रायणं द्विविधं यवमध्यं पिपीलिकामध्यं चेति । एकग्रासममा-वास्यादि यवमध्यं पञ्चदशग्रासं पौर्णमास्यादि पिपीलिकामध्यम् " इति ।

**मनुरपि** ( ११।२१६–२१७ )—

" एकैकं ह्रासयेद् ग्रासं कृष्णे शुक्ले च वर्धयेत् । उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणव्रतम् ॥

२५ " एवमेव विधिं कृत्स्नमाचरेद्यवमध्यमे । शुक्लपक्षादिनियतश्चरेच्चान्द्रायणव्रतम् " ॥ इति ।

**वपनादिक्रमः** । वपनादीतिकर्तव्यतामाह **गौतमः** (२७।२–१५)—"वपनादिव्रतं चरेत् । श्वोभूतां पौर्णमासीमुपवसेदाप्यायस्व सं ते पयांसि नवो नव इति चैताभिस्तर्पणमाज्यहोमो हविषां चानुमन्त्रणमुपस्थानं चन्द्रमसो यद्देवा देवहेलनमिति चतसृभिराज्यं जुहुयात् । देवकृतस्येति चान्ते समिद्भिः । ओं भूर्भुवः सुवर्महर्जनस्तपः सत्यं यशः श्रीरूर्गिडौजास्तेजः पुरुषो धर्मः शिव
३० इत्येतैर्ग्रासानुमन्त्रणं प्रतिमन्त्रं मनसा । नमः स्वाहेति वा सर्वानेतैरेव ग्रासाननुभुञ्जीत । ग्रास-प्रमाणमास्याविकारेण । चरुभैक्षसक्तुकणयावकशाकपयोदधिघृतमूलफलोदकादीनि हवींष्युत्तरोत्तरं प्रशस्तानि । द्वादशैतानि पौर्णमास्यां पञ्चदशग्रासान् भुक्त्वा एकैकापचयेनापरपक्षमश्नीयात् । अमावास्यायामुपोष्यैकैकोपचयेन पूर्वपक्षं विपरीतमेकेषामेष चान्द्रायणो मासः " इति ।

---

१ घ—न । २ क्ष—कंवि ।

पुनरपि प्रकारान्तरेण त्रिविधं ऋषिचान्द्रायणं शिशुचान्द्रायणं यतिचान्द्रायणं चेति। तेषां स्वरूपमाह **यमः**—

"त्रींस्त्रीन् पिण्डान् समश्नीयात् नियतात्मा दृढव्रतः[1]। हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम्॥
"चतुरः प्रातरश्नीयात् चतुरः सायमेव च। पिण्डानेतद्धि बालानां शिशुचान्द्रायणं स्मृतम्॥
"पिण्डानष्ट समश्नीयात् मासं मध्यंदिने रवौ। यतिचान्द्रायणं ह्येतत् सर्वकल्मषनाशनम्"॥ इति। ५

**विष्णुः** पञ्चविधमाह (४७।१-९)—"अथातश्चान्द्रायणं ग्रासानास्याविकारमश्नीयात्। तांश्च कलाभिवृद्धौ क्रमेण वर्धयेत्। हानौ च ह्रासयेत्। अमावास्यायां च नाश्नीयात्।"

**दक्षः**—"चान्द्रायणो यवमध्यः पिपीलिकामध्यो वा यस्याममावास्या मध्या भवति स पिपीलिकामध्यः। "यस्य पौर्णमासी स यवमध्यः। अष्टौ ग्रासान् प्रतिदिनमश्नीयात् स यतिचान्द्रायणः। सायं "प्रातश्चतुरश्चतुरः स शिशुचान्द्रायणः। यथाकथंचित् पिण्डानां तिस्रोऽशीतीर्वा समश्नीयात् १० "ससामान्यचान्द्रायणः" इति।

**चान्द्रायणे ग्रासपरिमाणम्।** चान्द्रायणेऽभिहितस्य पिण्डस्य परिमाणमाह **पराशरः** (१०।३)—

"कुक्कुटाण्डप्रमाणं तु ग्रासं वै परिकल्पयेत्। अन्यथाभावदोषेण न धर्मो न च शुध्यति"॥

व्रताचरणानन्तरं कर्तव्यमाह **स एव** (८।४८)— १५

"प्रायश्चित्ते ततश्चीर्णे कुर्यात् ब्राह्मणभोजनम्। गोद्वयं वत्ससंयुक्तं दद्याद्विप्राय दक्षिणाम्"॥ इति। संख्याविशेषानुपादानात् शक्त्यनुसारेण ब्राह्मणभोजनम्।

**चान्द्रायणफलनिरूपणम्।** चान्द्रायणस्य फलं दर्शयति **यमः**—

"यत् किंचित् क्रियते पापं कर्मणा मनसा गिरा। द्विजश्चान्द्रायणं कृत्वा तस्मात्पापात् प्रमुच्यते॥
"एतानि विधिवत् कृत्वा षड्भिर्मासैर्हविष्यभुक्। व्यपेतकल्मषो विप्रश्चन्द्रस्यैति सलोकताम्"॥ २०

**व्रतग्रहणप्रकारः।** व्रतग्रहणप्रकारमाह **विष्णुः**—

"सर्वपापेषु सर्वेषां व्रतानां विधिपूर्वकम्। ग्रहणं संप्रवक्ष्यामि प्रायश्चित्ते चिकीर्षिते॥
"दिनान्ते नखरोमादीन् प्रवाप्य स्नानमाचरेत्। भस्मगोमयमृद्वारिपञ्चगव्यादिकल्पितैः॥
"मलापकर्षणं कार्यं बाह्यशौचोपसिद्धये"॥ इति। **जाबालिः**—

"आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः। आज्येनैव हि शालाग्नौ जुहुयाद् व्याहृतीः[2] पृथक्॥ २५
"कायाभ्यङ्गं शिरोभ्यङ्गं ताम्बूलमनुलेपनम्। व्रतस्थो वर्जयेत्सर्वं यच्चान्यत् बलरागकृत्"॥ इति।

गृही तस्य व्रतस्यासमापने प्रत्यवायमाह **छागलेयः**—

"पूर्वं व्रतं गृहीत्वा तु नाचरेत् कामतो हि यः। जीवन् भवति चण्डालो मृतः श्वा चाभिजायते"॥

**ब्रह्मकूर्चस्वरूपं तत्परिमाणं च।** ब्रह्मकूर्चस्य स्वरूपमाह **पराशरः** (११।२७-३७)—

"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। निर्दिष्टं पञ्चगव्यं तु पवित्रं पापनाशनम्॥ ३०
"गोमूत्रं कृष्णवर्णायाः श्वेतायाश्चैव गोमयम्। पयश्च ताम्रवर्णाया रक्ताया गृह्यते दधि॥
"कपिलाया घृतं ग्राह्यं सर्वं कापिलमेव वा। मूत्रमेकपलं दद्यादङ्गुष्ठार्धं तु गोमयम्॥

---

१ ख—दृढव्रतः। २ क्ष—दाहुतिः।

" क्षीरं सप्तपलं दद्यात् दधि त्रिपलमुच्यते। घृतमेकपलं दद्यात् पलमेकं कुशोदकम्॥
" गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम्। आप्यायस्वेति च क्षीरं दधिक्रावृणस्तथा दधि॥
" तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम्। पञ्चगव्यमृचा पूतं स्थापयेदग्निसंनिधौ॥
" आपो हि ष्ठेत्यृचालोड्य मानस्तोकेति मन्त्रयेत्। सप्तावरास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः॥
५ " एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि। इरावती इदं विष्णुर्मानस्तोकेति शंवेति॥
" एताभिश्चैव होतव्यं हुतशेषं पिबेद् द्विजः। आलोड्य प्रणवेनैव निर्मथ्यं प्रणवेन तु॥
" उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु। मध्यमेन पलाशस्य पद्मपत्रेण वा पिबेत्॥
" स्वर्णपात्रेण रौप्येण ब्रह्मतीर्थेन वा पुनः। यत्त्वगस्थिगतं पापं देहे तिष्ठति देहिनाम्॥
" ब्रह्मकुर्चो दहेत्सर्वं प्रदीप्तोऽग्निरिवेन्धनम्। पवित्रं त्रिषु लोकेषु देवताभिरधिष्ठितम्॥
१० " वरुणश्चैव गोमूत्रे गोमये हंसवाहनः। दध्नि वायुः समुद्दिष्टः सोमः क्षीरे घृते रविः"॥
यथोक्तपरिमाणानि द्रव्याणि पलाशादि पात्रे गायत्र्याभिः संयोज्य स्थापयित्वा आपो हि ष्ठेति त्र्यृचेनालोड्य मानस्तोकेत्यभिमन्त्र्य सप्तावरैः हरितवर्णैः दर्भैरादाय इरावति इदं विष्णुर्मानस्तोके शंनो देवीरिति चतसृभिरग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा ओं स्वाहा अग्नये स्विष्टकृते स्वाहा। इति प्राजापत्योक्तैर्मन्त्रैश्च पलाशपत्रेण हुत्वा हुतशेषं हस्तेन काष्ठेन वा निर्मन्थ्य
१५ पिबेत्। गोमूत्रादीनां परिमाणान्तरमाह प्रजापतिः—
" गोमयात् द्विगुणं मूत्रं सर्पिर्दद्याच्चतुर्गुणम्। क्षीरमष्टगुणं देयं दधि पञ्चगुणं तथा"॥ इति। अत्र गोमयस्य परिमाणविशेषानभिधानात् वचनान्तरादङ्गुष्ठार्धपरिमितं ग्राह्यम्। पर्वद्वयोपेतमङ्गुष्ठं तत्रोपरितनपर्वणा समानपरिमाणं गोमयं स्वीकृत्य यथोक्तोत्तराभिवृध्या गोमूत्रादीनि योजयेत्। एतच्च पूर्वोक्तपरिमाणेन सह विकल्प्यते। स एव—
२० " पालाशं पद्मपात्रं वा ताम्रं वाऽथ हिरण्मयम्। गृहीत्वा सादयित्वा तु ततः कर्म समारभेत्॥
" स्थापयित्वाऽथ दर्भेषु पालाशैः पत्रकैरथ। तत्समुद्धृत्य होतव्यं देवताभ्यो यथाक्रमम्॥
" अग्नये चैव सोमाय सवित्रे च तथैव च। प्रणवेन तथा हुत्वा स्विष्टकृत्वा तथैव च"॥ इति। ब्रह्मकूर्चस्य कालविशेषमाह स एव—" चतुर्दश्यामुपोष्याथ पौर्णमास्यां समाचरेत्"॥ इति। जाबालिरपि—
२५ " अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः। पञ्चगव्यं पिबेत्प्रातर्ब्रह्मकूर्चमिति स्मृतम्"॥
देशविशेषमाह शातातपः—
" नदीतीरेषु गोष्ठेषु पुण्येष्वायतनेषु वा। तत्र गत्वा शुचौ देशे ब्रह्मकूर्चं समाचरेत्"॥ इति।
**प्राजापत्यादिप्रत्याम्नायः**। अथ पूर्वोक्तानां व्रतानां केनचिन्निमित्तेनानुष्ठानाशक्तौ यथायोगं प्रत्याम्नाया उच्यन्ते। तत्र प्राजापत्यप्रत्याम्नायाश्चतुर्विंशतिमते दर्शिताः—
३० " कृच्छ्रोऽयुतं तु गायत्र्या उदवासस्तथैव च। धेनुप्रदानं विप्राय सममेतच्चतुष्टयम्॥
" तिलहोमसहस्रं तु वेदपारायणं तथा। विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च॥
" अन्या वा पावमानेष्टिः समान्याहुर्मनीषिणः"॥ तिलहोमसहस्रं गायत्र्या।

---

१ गब-शंवती। २ ब-प्रणवेनाभिमन्त्रयेत्। ३ ब-रव।

**पराशरः** ( १२।५६–५७ )—

" कृच्छ्रे देव्ययुतं चैव प्राणायामशतद्वयम् । पुण्यतीर्थेनार्द्रशिरः स्नानं द्वादशसंख्यया ॥

" द्वियोजनं तीर्थयात्राकृच्छ्रमेकं प्रकल्पितम् " ॥ इति । अनार्द्रं शिरो यस्यासावनार्द्रशिराः तस्य स्नानमनार्द्रशिरःस्नानम् । सकृत् स्नात्वा तदङ्गानुष्ठानं च कृत्वा केशान् शोषयित्वा ततो द्वितीयस्नानमाचरेत् । एवंविधस्नानद्वादशकं पुण्यतीर्थे कृतमित्यर्थः । **हेमाद्रौ**— ५

" कृच्छ्रोऽयुतं तु गायत्र्या विप्रद्वादशभोजनम् । तिलहोमसहस्रं वा सममेतच्चतुष्टयम् " ॥ इति । द्वादशब्राह्मणभोजनं निर्धनविषयम् । धनिकस्य प्रतिदिनं पञ्चपञ्चेति द्वादशसु दिवसेषु षष्टिर्ब्राह्मणा भोजनीयाः । अत एव **स्मृत्यन्तरम्**—

" प्राजापत्यं चरन् विप्रो यद्यशक्तः कथंचन । प्रत्यहं पञ्च विप्राग्र्यान् भोजयेत्सम्यगीप्सितान्" ॥

**अन्यत्रापि**— १०

" षष्टिश्चतुर्विंशतिर्वा भोज्या द्वादश वा द्विजाः । तावद्भोजनपर्याप्तं धान्यं तन्मूल्यमेव वा ॥

" तत्समृद्ध्यसमृद्धिभ्यां संख्यावैषम्यभाषणम् " ॥ इति । **माधवीये**—

" प्राजापत्यक्रियाशक्तौ धेनुं दद्यात् द्विजोत्तमः । धेनोरभावे दातव्यं मूल्यं तुल्यं न संशयः " ॥ इति । मूल्यं च यथाशक्ति देयम् ।

" गवामभावे निष्कं स्यात् तदर्धं पादमेव वा । पादहीनं न कर्तव्यमिति **शातातपो**ऽब्रवीत् " ॥ इति १५ **स्मरणात्** । **स्मृत्यन्तरेऽपि**—

" कृच्छ्रोऽयुतं तु गायत्र्या उदवासस्तथैव च । समुद्रगानदीस्नानं सममेतच्चतुष्टयम् " ॥ इति [1] नदीस्नानं मृत्तिकास्नानम् ।

**चान्द्रायणादीनां प्रत्याम्नायाः** । चान्द्रायणादीनां प्रत्याम्नायाश्चतुर्विंशतिमते दर्शिताः–

" चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च । मित्रविन्द्राकृतिश्चैव कृच्छ्रं मासत्रयं तथा ॥ २०

" तिलहोमायुतं चैव पराकद्वयमेव च । गायत्र्या लक्षजप्यं च समान्याह प्रजापतिः ॥

" नित्यनैमित्तिकानां च काम्यानां चैव कर्मणाम् । इष्टीनां पशुबन्धानामभावे चरवः स्मृताः ॥

"पराकतप्तकृच्छ्राणां स्थाने कृच्छ्रत्रयं चरेत् । व्रतहोमादिकान्वापि कल्पयेत् पूर्वकल्पवत्"॥ इति ।

**स्मृत्यन्तरे**—

" चान्द्रायणं त्रयः कृच्छ्रा गायत्र्या अयुतत्रयम् । तथा महानदीस्नानं सममेतच्चतुष्टयम् " ॥ इति । २५

**महानदीपरिगणनम्** । महानद्यः परिगणिताः

**देवलः**—" अथ गङ्गा सरस्वती यमुना नर्मदा विपाशा वितस्ता कौशिकी नन्दा विरजा चन्द्रभागा सरयूः शरावती सिन्धुः कृष्णवेणी शोणा तापिनी पाषाणगा गोमती गण्डकी बाहुदा पम्पा देविका कावेरी ताम्रपर्णी चर्मण्वती वेत्रवती गोदावरी तुङ्गभद्रा सुचक्षुररुणा चेति महानद्यः पुण्यतमाः " ॥ इति । **चतुर्विंशतिमते**— ३०

" प्राजापत्ये तु गामेकं दद्यात् सांतपने द्वयम् । पराकतप्तकृच्छ्रेषु तिस्रस्तिस्रस्तु गाः स्मृताः ॥

" अष्टौ चान्द्रायणे देयाः प्रत्याम्नायविधौ सदा । यथावित्तानुसारेण दानं दद्याद्विशुद्धये " ॥ इति ।

---

१ घ–त्रशु । २ घ–बृहस्पति ।

यत्तु स्मृत्यन्तरे चान्द्रायणस्य गोदानत्रयमभिहितम्

" प्राजापत्ये तु गामेकामतिकृच्छ्रे द्वयं स्मृतम् । चान्द्रायणे पराके च तिस्रस्ता दक्षिणास्तथा " ॥ इति तान्निर्धनविषयम् । गोदानाद्यवशक्तो गोभ्यस्तृणं दद्यात् । तदाह कण्वः—

" एकमध्ययनं कुर्यात् प्राजापत्यमथापि वा । दद्यात् द्वादशसाहस्रं गवां मुष्टिं विचक्षणः " ॥ इतिं ।

५ चतुर्विंशतिमते—" कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेवं तृतीये ।

" चत्वारिंशच्च तप्ते त्रिगुणनगुणिता विंशति स्यात्पराके ॥

" कृच्छ्रे संतापनाख्ये भवति षडधिका विंशतिः सैव हीना ।

" द्वाभ्यां चान्द्रायणे स्यात्तपसि कृशबलो भोजयेद्विप्रमुख्यान् " ॥ इति । अहरहरिति सर्वत्र संबध्यते । तृतीयः कृच्छ्रातिकृच्छ्रः । अध्ययनजपादीनां पुरुषविशेषेण व्यवस्था तत्रैव दर्शिता—

१० " धर्मनिष्ठास्तपोनिष्ठाः कदाचित्पापमागताः । जपहोमादिकं तेभ्यो विशेषेणाभिधीयते ॥

" नामधारकविप्रा ये मूर्खा धर्मविवर्जिताः । कृच्छ्रचान्द्रायणादीनि तेभ्यो दद्याद्विशेषतः ॥

" धनिना दक्षिणा देया प्रयत्नविहिता तु या । एवं नरविशेषेण प्रायश्चित्तानि पातयेत् " ॥ इति । यत्र यावत्संख्यया प्राजापत्यान्यावर्तनीयानि भवन्ति तत्र तावत्संख्यया गोदानादीन्यावर्तनीयानि । तदपि चतुर्विंशतिमते दर्शितम्—

१५ " जन्मप्रभृति पापानि बहूनि विविधानि च । अर्वाक्तु भ्रूणहत्यायाः षडब्दं कृच्छ्रमाचरेत् ॥

" प्रत्याम्नाये गवां देयं साशीति धनिना शतम् । तथाष्टादशलक्षाणि गायत्र्या वा जपेद्बुधः " ॥ इति ।

इति श्रीवाधूलवंशमुक्ताफलवैद्यनाथदीक्षितविरचिते स्मृतिमुक्ताफले प्रायश्चित्तनिरूपणं नाम षष्ठः परिच्छेदः ॥

१ ख–शीर्षे । २ ख–णवि । ३ ख–दाप । ४ ख–त्वार्वाक् ।

# स्मृतिमुक्ताफलपुस्तकोध्दृतऋषिवचनानाम् अकारादिवर्णतः सूचिः ।



**देवस्वामी**



**देवीपुराणम्**



**धर्मदीपः**



**धर्मशास्त्रसारः**

**स्मृत्यर्णवः**



**स्मृत्यर्थसारम्**

## ADDENDA

XVI ... inary and [ Rs. 2.

XVI ... etermining ... h the rites Rs. 3.

XVII ... lefinitions, ... ext) Rs 3.

XIX ... nciples of ... ( Text ) Rs. 2.

XX ... cation of ... ) Rs 1.

XXII ... iples and ... t) Rs. 1.

XXIII. ... kinds of ... Rs. 3.

XXIV. ... t). Re. 1.

XXV. ... ory rites ... t) Rs. 3.

XXV. ... Dikshita

XXVI. **Dipakalika**—A commentry on Yâjñavakya Smrti by S'ulapâni (In the press.)

**Other works by the same Author—**

1. **Hindu Law**, Fourth Edition. Rs. 4.
2. **History and Principles of Roman Law**--With comparative references in the notes to parallel provisions in the Hindu law and other systems of law. This book is intended as a help to students preparing for the several Law Examinations, as well as a guide to Research and other students reading for the higher Examinations. Rs. 4.

## धर्मशास्त्रमालायां ग्रथितपुस्तकानां सूची

| ग्रन्थनाम | मूल्यम् |
|---|---|
| १. **याज्ञवल्क्यस्मृतिः** मिताक्षराटीकासहिता ... | ८ |
| २. **सुबोधिनी** व्यवहाराध्यायः–मिताक्षराटीका भट्टविश्वेश्वरकृता ... ... ... | ३–८ |
| ३. **बाळंभट्टी**-आचाराध्यायः ... ... | १० |
| ४. ,, व्यवहाराध्यायः ... ... | ६ |
| ५. ,, प्रायश्चित्ताध्यायः ... ... | ६ |
| ६. **स्मृतिचंद्रिका**–देवण्णभट्टकृता ( आन्हिक-व्यवहार-श्राद्धकाण्डानि ) ... ... | १२ |
| ७. **स्मृतिमुक्ताफलम्**-वैद्यनाथदीक्षितीयम् | |
| ( १ ) वर्णाश्रमधर्मकाण्डम् ... | ४–८ |
| ( २ ) आन्हिककाण्डम् ... | ४-८ |
| ८. **मनुस्मृति** मेधातिथिभाष्यसहिता | (अप्राप्या) |

९ भट्टनीलकंठकृते **भगवंतभास्कराख्य**प्रबंधे ग्रथिता **द्वादशमयूखाः** रु. २३

| | | | |
|---|---|---|---|
| संस्कारमयूखः ... ... ... | ३—० | उत्सर्गमयूखः ... ... ... | १—० |
| आचार ,, ... ... ... | २—० | प्रतिष्ठा ,, ... ... ... | १—० |
| काल ,, ... ... ... | ३—० | प्रायश्चित ,, ... ... ... | ३—० |
| श्राद्ध ,, ... ... ... | ३—० | शुद्धि ,, ... ... ... | १—० |
| नीति ,, ... ... ... | २—० | शान्ति ,, ... ... ... | ३—० |
| व्यवहार ,, ... ... ... | ४—० | | |

आंग्लभाषांतरितसटीपग्रन्थास्तूपर्युल्लेखिता एव।